ऽयोग्यता यथा ॥

एगपक्खियस्स भिक्खुस्स कप्पइ इतिरियं दिसं वा अणुदिसं वा धारित्तए वा जहा वा तस्स गणस्स परियंसि वा ॥ २४ ॥ व्य. सू. ३ उ. ॥

एकपाक्षिकानेकपाक्षिकयोर्योग्याऽयोग्यता ( चानुपाण्णकप्प ) शब्दे ॥

( २५ ) लक्षणं मेढीभूतः ॥

तत्र गणस्य बहुव्रतिनीसमुदायात्मकस्य प्रत्येकं परीक्षा कर्तुं न शक्यते अथाचार्ये च परीक्षिते प्रायोगणोऽपि परीक्षित एव मेढ्यादिसमानत्वेन तत्प्रवर्तकत्वादाचार्यस्य गणस्य च तदनुवर्तित्वादित्यतः प्रथममाचार्यमेव परीक्षेतेत्याह ॥

मेढी आलंवणं खंभं, दिट्ठि जाणसुउत्तमं ॥
सूरी जंहोइ गच्छस्स, तम्हा तं उ परिक्खए ॥ ८ ॥

व्याख्या यद्यस्मात्कारणात् सूरिः सदाचार्यो गच्छस्य गणस्य ( मेढित्ति ) मेढिः खले गोवंधस्थूणा तत्समानो भवति। यथा तया बलानि पशुवृंदानि मर्यादया प्रवर्त्तते तथाचार्यो मेढीबद्धो गच्छोऽपि मर्यादया प्रवर्तत इत्यर्थः । तथालंवनं हस्ताद्याधारस्तत्समानः यया हस्ताद्याधारो गर्तादौ पतज्जंतुं धारयति। तया ऽचार्योपि भवगर्ते पतंतं गच्छं धारयतीत्यर्थः । तया ( खभंति ) स्तंभः स्थूणा अत्र नपुंसकत्वं प्राकृतत्वादेव तत्समानः । यथा स्थंभः प्रासादाधारः स्यात् तथाचार्योपिगच्छप्रासादाधारः तथा ( दिट्ठित्ति ) दृष्टिर्नेत्रं तत्समानः यथाजंतोर्नेत्रं शुभाशुभवस्तुप्रदर्शकं भवति तथा ऽऽचार्योपि गच्छस्य भाविशुभाशुभप्रदर्शकः स्यात् तया( जाणं सूत्तमंति )यानं यानपात्रं सूत्तममतिप्रधानमच्छिद्रमित्यर्थः तत्समानो यथा अच्छिद्रयानपात्रं समुद्रतीरं नयति जंतून् तथाचार्योपिगच्छे भवाति तस्मात् प्रथमं तंतुत्तिनोरवकारार्थं त्वात् तमेवाचार्यमेव परीक्षेत गच्छपरिक्षेच्छुः साधुरिति अनुष्टुप्छंदः । एवंचात्र ग्रंथे त्रयोधिकाराः सूचिताः तद्यथा आचार्यस्वरूपाधिकारः १ साधुस्वरूपाधिकारः २ साध्वी स्वरूपाधिकारश्च ३ तत्र प्रथममाचार्यस्वरूपाधिकारं निरुपयितुकामः कैश्चिन्हैः छद्मस्थ उन्मार्गप्रस्थितमाचार्यं परीक्षेतेति प्रश्नयन्नाह ॥

भयवं कहिं भिंगेहिं, सूरिं उम्मग्गपट्ठिअं ॥
विआणिज्जाउ उमत्थे, मुणि ! तंमे निसामय ॥ ९ ॥

व्याख्या । हे भगवन् ! परमैश्वर्यादिसमन्वित ! कैर्लिङ्गैश्चिन्हैः रुन्मार्गप्रस्थितमसन्मार्गेस्थितं सूरिमाचार्यं छद्यते केवलज्ञानं केवलदर्शनं चात्मनोऽनेनेति छद्म तत्र तिष्ठतीति छद्मस्थस्तं विजानीयात् परीक्षेतेति परप्रश्ने गुरुराह हे मुने ! यैश्चिन्है राचार्यमुन्मार्गेप्रस्थितं छद्मस्थः परीक्षेत तन्मे मम कथय इति शेषः ( निसामयत्ति ) त्वं निशामयाकर्णयेति अनुष्टुप् छंदः ॥ ९ ॥ अथ वृत्त द्वयेनपूर्वोक्तशिष्यप्रश्नोत्तरमेवाह ॥

सच्छंदयारिं दुस्सीलं, आरंभेसु पवत्तयं ॥
पुढवाइपरिवक्कं, आउकायविहिंसगं ॥ १० ॥
मूलुत्तरगुणब्भट्ठं, सामायारीविराहयं ॥
अदिन्नालोअणं निच्चं, विकहासु परायणं ॥ ११ ॥

अनयोर्व्याख्या ॥ स्वच्छंदेन स्वाभिप्रायेण न तु जिनाज्ञया चरतीति स्वच्छंदचारी तं तया दुष्टं शीलमाचारो यस्य स दुश्शील स्तं तयारंभः पृथिव्याद्युपद्रवणानि उपलक्षणत्वात्संरंभसमारंभावपि । तत्र संरंभः संकल्पः समारंभस्तु परितापकरः। उक्तं च ॥

संकप्पो संरंभो, परितावकरो भवे समारंभो ॥
आरंभो उद्दवओ, सुध्दनयाणं तु सव्वेसिं ॥ १ ॥

तत्र स्वान्ययोः प्रवर्त्तकस्तं तया पीठकमासनं आदिशब्दात् फलकपट्टिकादयस्तत्र प्रतिबद्धः कारणं विनापि ऋतुबद्धकाल तत्परिभोजीत्यर्थः ॥ ग. १ अधि. ॥

( २६ ) परीक्षा आचार्यस्य ॥

सुध्दस्सय पारिच्छा, खुड्डयथेरेयतरुणखज्जूडे ॥
दोमादिमंगलीए, सुध्दमसुध्दे ततोपच्छा ॥

शुद्धस्य परीक्षा कर्त्तव्या कस्मिन्विषये इत्यत आह । क्षुल्लके स्थविरे तरुणे खज्जूडः स्वभावाद्वक्राचारः तस्मिंस्तया द्वयोरादिमंगल्योः एताभिः परीक्षाभिर्यदि निर्वर्तितस्ततः शुद्धः इतरस्त्वशुद्धः शुद्धस्य च गणधरपदानुज्ञा कर्त्तव्या ना शुद्धस्य ततः शुद्धाशुद्धप्रतिपादनानंतरं चोदकं पृच्छा उपलक्षणमेतदाचार्यस्य प्रतिवचनं च वक्तव्यं एप द्वारगाथासंक्षेपार्थः । सांप्रतमेनामेव गाथां विवरीषुः प्रयमतः क्षुल्लकविषयं परीक्षाविधिमाह ॥

उच्चफलो अहखुड्डो, सज्जणिच्छावोपवासिउं दुक्खं ।
पुट्ठोवि होहिति न वा, पच्छिमंथो सारवंतस्स ॥

तस्य द्रव्यभावपरिच्छेदोपेतस्य गणधरपदयोग्यता परीक्षणाय प्रथमतः क्षुल्लको दीयते । एवं द्विविधामपि शिक्षां त्वं ग्राहय ततः स एव मुक्तः सन् यदि चिंतयति यथा (अहत्ति) एप क्षुल्लकः उच्चं चिरकालभाविफलं यस्मात्स उच्चफलश्चिरकालेनोपकारी तावता कालेन किमपि भविष्यतीति कोवेद ततः कोमनं शिक्षां ग्राहयिष्यति यदि वा शकुनिशावलिवावत्पोष्यः पोष्यते । पुनः पुनर्बुभुक्षाभावादिति भावः । अपि च पुष्टोऽपि भवेप मम भविष्यति वानवा को न जानाति अन्यच्चामुं धारयतः सारं कुर्वतो मम सूत्रस्य च महान्पलिमंथो व्याघातस्ततो नैतस्य मे शिक्षया प्रयोजनमेवं चिंतयन् योन ग्राहयति सोऽनर्हस्तद्विपरीतो ऽर्हस्ततो यः स्थविर एप प्रवचनोपग्रहकरो भविष्यति दृढदेहो वा यया आचार्यरक्षितः पितेति कारणतो दीक्षितस्तिष्ठति स शिक्षकस्तस्य समर्प्यते एवं द्विविधामपि शिक्षां ग्राहयति तस्मिंस्तत्समर्पिते यदि स इदं चिंतयति ॥

पुट्ठोवा स मरिसति, दुराणुवुत्तो न वेज्झपरियारो ।
सुत्तत्थे परिहाणी, थेरे वंहुयं निरत्थं तु ॥

एप प्रथमाशिक्षादिदापनतः शिक्षाग्राहणतश्च पुष्टीकृतोऽप्याशु शीघ्रं मरिष्यति च शब्दः चिंतांतरसमुच्चये । यदिवा वृद्धः स्वभावात् दुरनुवर्त्य दुःखेनानुवर्त्यं तेन वा अत्र वृद्धशिक्षापने कश्चित् प्रतीकारः किमुक्तं भवतिनास्माद्वृद्धात् कश्चित् प्रत्युपकारोऽथवा वृद्धो वृद्धत्वादेव जडप्रज्ञश्च ततोस्य शिक्षणे मम सूत्रार्थपरिहाणिस्तदेव स्थविरशिक्षां ग्राह्यमाणे बहुकनिरर्थकमिति य एनं चिंतयित्वा योन शिक्षां ग्राहयति सोऽनर्हस्तद्विपरितोऽर्ह इति तदनंतरं योऽसौ तरुणो मेधावी तं समर्प्य भण्यते यथा एप मंडलिपरिपाट्या आलापके दीयमाने सीदति तत त्वमेतमप्याकेपेण पाठय । ततः स इदं चिंतयति ॥

अहियं पुच्छति गिह्णए, बहुं किं गुणो चरणेण ॥
होहिंति य विवरूंतो, एसो ममं पमिसपत्ती ॥
एष मेधावित्वादधिकं पृच्छत्यवगृह्णाति वाऽवधारयति बहु प्रभूतं तत इत्थमस्यैव सूत्रस्यार्थस्य चरकेण प्रदानत आकणिकतया को गुणो मम निरर्थकः कश्चिदित्यर्थः । केवलं दोषो निजसूत्रार्थपरिगलनादन्यश्च एष हु निश्चितं विवर्द्धमानः सूत्रतोऽर्थतश्च वृद्धिं गच्छन् मम प्रतिसपत्नीव प्रतिपंथी भविष्यति । ततो न कोऽप्येनं पाठयिष्यतीति यो न शिक्षयति सोऽनर्हस्ततः खज्जूरं दत्वा स भण्यते । अमुं तया ग्राह्य । यद्वा गुरुः समाचारीकुशलश्च भवति ततो यदि ॥
कोही निरुवगारी, फरुसो सव्वस्स वामवट्टो य ।
अविणीतोत्ति व काउं, हंतुं सत्तं व निच्छुंजती ॥
क्रोधी यदि वा निरुपकारी अथवा परुषः परुषभाषी तथा सर्वस्य साधुवर्गस्य वामावर्तः प्रतिकूलतया वर्तते यदि वा अविनीत इति कृत्वा शिक्षां ग्राहयति । अथवा आकुश्य शत्रुमिव वा हत्वा निष्काशयति तर्हि सोऽनर्हस्तद्विपरीतोऽर्हः ॥
संप्रति चतुर्ष्वपि यो जनेषु तद्विपरीततया यथार्हो भवति तथा भावयति ॥
वत्थाहारादीहिं,संगेह्न अणुवत्तए य जो जुयलं ॥
गाहेइ अपरितंतो, गाहण सिक्खावए तरुणं ॥ १ ॥
खरुमउएहि अणुयत्तत्ति, खज्जूरं जेण पमइ पासेणं ॥
गाढमवहारविजढो, तत्थोइणमप्पणो कुणइ ॥ २ ॥
यो नाम युगलं क्षुल्लकवृद्धलक्षणं वस्त्राहारादिभिः संगृह्णाति आत्मवशीकरोत्यनुवर्तयाति च तरुणमपरिश्रांतः परिश्रममगणयन् ग्राहयति । ग्राहणं ग्राह्यते शिष्य एतदिति बाहुलकात् कर्मण्यनट् । ग्राहणमाचारादिसूत्रं आसेवनां शिक्षयति तथा खज्जूरं खरमृदुभिर्वाक्यैस्तथानुवर्तयाति । येन स पार्श्वे न पतति अन्यथा गतिं न लभते इति मन्यमानस्तद्वशीभवति तथाऽयःस्थानादपि चलन्नपि सन् खज्जूरतया विहारविजढो भवति विहारं न करोतीति भावस्तत्र तद्गुणमंगीकारमात्मना करोति । यथैनमहं खरेण मृदुना चोपायेन विहारक्रमं कारयिष्यामीति एष एवं भूतोयोग्यः ॥
इयमुव्व सुत्तमंमलिं, दाविज्जइ अत्थमंमलिं चेव ।
दोहिं पि अ सीयंते, देइ गणं चोइए पुच्छा ॥
इत्येवमुपदर्शितेन प्रकारेण चतुर्ष्वपि जनेषु सूत्रोपदेशतः परीक्षितः सन् शुद्धो भवति न मनागपि दोषः । ततस्तस्य सूत्रमंमली दाप्यते अर्थमंमली च एतयोरपि मंमल्योर्यदि न विषीदति किंत्वपरिश्रांततया गच्छवर्तिनां प्रातीच्छकानां च ज्ञानाद्यभिलाषिणां चित्तग्राहको वर्तते ततस्तस्मिन् सूत्राचार्यो गणं ददाति एवमुक्ते चोदके चोदकस्य पृच्छा केत्यत आह ।
चोएइ जाणिऊणं, उजयाभिन्नस्स दिज्जइ गणोत्ति ॥
सुत्तेय अणुन्नायं, जयरं चरणं पच्छिउन्नो ॥ १ ॥
अपरिहाण परिह, परिउंद अत्थेण जं गुणो परूवेह ॥
एवं होइ विरोहो, सुत्तत्थेणं दुवेन्हंपि ॥ २ ॥
नोदयति प्रश्नयति परोयथा पूर्वमिदमुक्तं उभयाच्छिन्नस्य द्रव्यभावपरिच्छदविशेषात् शाक्यस्यपरिकलितस्य गणोदीयते । युक्तं चैतत् । यतः सूत्रेऽपि चशब्दोऽपि शब्दार्थः भगवन् ! धारणं गणधारणमनुज्ञातं । परिच्छिन्ने द्रव्यभावपरिच्छदोपेतमात्रे तत एवमुक्त्वा यदर्हानर्हपरीक्षामर्थेनार्यमाश्रित्य प्ररूपयथाः । नन्वेवं सति द्वयोरपि सूत्रार्थयोर्भवति विरोधः । उक्तस्वरूपस्याऽर्थस्याधिकृतसूत्रेणासूचनात् ॥
अत्र सूरिराह ॥
संति हि आयरिय जगाणि, सत्थाणि चोयग ! सुणाहि ॥
सुत्ताणुग्गतो वि हु ,होइ कयाइ अणरिहोउ ॥ १ ॥
तेण परिच्छा कीरइ, सुवण्णगस्सेव तावनिहसादी ॥
तत्थ इमो दिट्ठंतो, रायकुमारेहिं कायव्वो ॥ २ ॥
चोदक ! शृणु मदीयं वचः संति हि स्फुटं तानि शास्त्राणि यान्याचार्यद्वितीयकानि किमुक्तं भवत्याचार्यपरंपराया तत्संप्रदायविशेषपरिकलितानि ततो यद्यप्यर्हानर्हपरीक्षालक्षणोऽर्थः सूत्रे साक्षान्नोपनिबद्धस्तथापि सूचनात् सूत्रमिति सोऽपि सूत्रे ण सूचित इति संप्रदायादवगम्यते इति न कश्चिद्दोषः । तथा च सूत्रानुज्ञापि हि निश्चितं कदाचिदनर्हो भवति । नच सूत्रमन्यथा सर्वज्ञप्रणीतत्वात्तेन परीक्षापि सूचितेति । तापनिकषादिभिः सुवर्णस्येव सूत्रानुज्ञानस्याऽपि क्षुल्लकादिभिः परीक्षा क्रियते । तत्रायं वक्ष्यमाणलक्षणोदृष्टांतो राजकुमारैः कर्तव्यः ॥
तमेवाह ॥
सूरे वीरे सत्तिए, ववसायथिरे चियायधितिमंते ॥
बुद्धिविणयकरणे, सीसेवि तहा परिच्छाए ॥
निब्भयओरस्सवली, अविसाइ पुणो करेंति संठाणं ॥
नवि संमाते देति अणस्सित्तो उ व उहाणुविंत्ति य ॥
इहाद्यगाथापदानां द्वितीयगाथापदैर्व्याख्यानं । तत्रथाशूरो नाम निर्भयः । सच कुतश्चिदपि न भयमुपगच्छति । वीरश्चौरसबलवान् तेनाक्लेशेन परबलं जयति । सात्विको नाम योमहत्यप्युदये गर्वं नोपयाति न च गरिष्ठेऽपि समापतिते व्यसने विषादं । तथाचाह । अविषादि उपलक्षणमेतत् अगर्वी वा व्यवसायी अनलस उद्योगवानित्यर्थः । तथाचाह । पुनः करोति संस्थानं । किमुक्तं भवति । प्रमादतः कथंचिद्व्यवसायविकलोऽपि भूत्वा पुनःकरोति संस्थां कर्तुमुद्यच्छति स्वोचितव्यवसायमिति भावः । स्थिरोनाम उद्योगं कुर्वन्नपि न परिताम्यति तथा चाह । विश्राम्यतीति (वियायत्ति) दानरुचिर्यथौचित्यमाश्रित्य स्वेभ्योऽन्येभ्यश्च ददातीत्यर्थः । धृतिमान् राज्यकार्याणि कुर्वन् परनिश्रामनपेक्षमाणः तथाचाह (अणिस्सित्ति) इति (बुद्धित्ति) औत्पत्तिक्यादिबुद्धिचतुष्टयोपेतः । विनीतो गुर्वादिषु विनयकारी यथौचित्य गुर्वादीनामनुवर्तक इत्यर्थः । करणे इति यद्राज्ञः कर्तव्यं तत्करणे कुशलः । एतेषु परीक्षा क्रियते किमेते गुणास्सन्ति न वा । तत्र य एतैर्गुणैरुपेतो भवति । स राज्ञो राज्येऽभिषिच्यते । दानशीलोऽभयः स्थिरस्सोऽपरिश्रांतस्सन् कर्तव्यं करोति । कृत्वापि च पश्चादनुपतापी त्यागवान् नाम दानशीलः स च स्तोकादपि स्तोकं ददानो गणस्य बहुमानभाग् भवति ॥
उवसग्गो सोढव्वे, झाये किच्चेसु या विदिसंतो ॥
बुद्धिचउक्कविणीतो, अहवा गुरुमादिविणीतोउ ॥
धृतिमान् उपसर्गान् सोढव्यान् ध्यायति । कृत्येष्वपि कार्येष्वविषादं प्रवर्तते । बुद्धिविनीत इत्यत्र इदमपि व्याख्यानं । बुद्धिचतुष्टयं नीतं प्रापितमात्मनि येन स बुद्धिविनीतः । सुखादिदर्शनात् क्तांतस्य पाक्षिकः परनिपातः । अथवा ( बुद्धित्ति ) बुद्धिचतुष्कोपेतो विनीतो गुर्वादिषु विनीतः ॥

दव्वाई जं जत्थ उ,जम्मि विकिव्वं तु जस्स वा जंतु ॥
कव्वइ अहीणकाळं, जियकरणविणीयएगत्थ ॥

यद्यत्र द्रव्याद्युपयोगि यस्य वा यत्र यत्कृत्यं तत्सर्वमहीनकालं जितकरणः करोति कारयति । जितकरणो विनीत इति द्वावप्येकार्थौ तात्पर्य विश्रांत्या शब्दार्थस्तु परस्परं भिन्नो जित करणो नाम करणदक्ष उच्यते। विनीत इति विनयकरणशीलः।

एवं जुत्तपरिग्गा, जुत्तो वेतेहिमेहिउ अज्जोगो ॥
आहारादिधरेंतो, तिंतिणिमाईहिं दोसेहिं ॥

एवमेतैरनंतरोदितैः सूरत्वादिभिर्गुणैर्युक्ता उचिता या परीक्षा तया युक्तोऽपि निश्चितः पात्रिर्वक्ष्यमाणैर्दोषैरयोग्यः। तानेवाह। आहारादि आहारोपधिपूजानिमित्तं गुणं धारयन् तिंतिणयादिभिश्च दोषैरयोग्यः। तिंतिणीनाम यत्र तत्र वा स्तोकेऽपि कारणे करकरायणं। आदिशब्दाच्चलचित्तादिपरिग्रहः॥ एतदेव व्याख्यानयति ॥

बहुसुत्ते गीयत्थे, धरेइ आहारपूयणट्ठाइ ॥
तिंतिणचल्लअणवट्ठिअ, दुव्वल चरणा अजोग्गो उ ॥

बहुकालोचितं सूत्रमाचारादिकं यस्य स बहुसूत्रो गीतार्थो विदितसूत्रार्थः। एतेन युक्तः परीक्षायुक्तोऽप्येत व्याख्यानयति एवंभूतोऽपि यो गणं धारयति ( आहारपूयणट्ठाई ) उत्कृष्टो मे आहारो भविष्यति पूजनं वा स्वपक्षतश्चेत्येवमर्थः आदिशब्दादुपधिरन्यद्वोपकरणमुत्कृष्टं मे भविष्यतीत्येवमर्थपरिग्रहः। सोऽयोग्यस्तथा। योतिंतिणः स्वल्पेऽपि प्रयोजने करकरायमाणः। चलश्चलचित्तोऽनवस्थितः स्वप्रतिपन्नार्थानिर्वाही । दुर्बल श्चरणचारित्रविषये दुर्बल एतेऽप्ययोग्याः।

एवं परिक्खियम्मि, पत्ते दिज्जइ अपात्तिपारिसेहो।
दुपरिक्खियपत्ते, पुण चारियहाविंति मामेरा ॥

एवमनंतरोदितेषु गुणेषु च यदि परीक्षया निर्धारितो भवति गुणैरुपेतो दोषैश्च विप्रमुक्त इत्यर्थः। तदा स पात्रमिति कृत्वा तस्मिन्परीक्षिते पात्रे गणोदीयते। यस्तु प्रागुक्तैर्दोषैरुपेतो गुणैश्च विप्रमुक्तः सोऽपात्रमिति तस्मिन्नपात्रे गणदानस्य प्रतिषेधस्तस्मिन् गणोन दातव्य इति भावः (दुपरिक्खिय) इत्यादि। अथ कदा चित् सुदुःपरीक्षितः कृतोभवेत् गणश्च तस्मै दत्तः स च गणःसीदति तं दृष्ट्वाऽन्येऽपि गच्छवर्त्तिनः केचित् सामाचारीशिथिला भवितुं प्रवृत्तास्ततः परीक्षिते पात्रे गणे प्रदत्ते सति गणोऽवसीदति । ये तत्र गच्छेऽन्यतीव्रधर्मका न सीदंति तैरुपायेन प्रतिबोध्य वारयितव्यः। तत्र यदि वारणानंतरमावृत्योद्यच्छति ततस्समीचीनमथ वारितोऽपि किंचित्कालमुद्यम्य पुनः समाचारीं हापयति । तत इयं मर्यादा कर्तव्या अयं विधिःप्रयोक्तव्य इत्यर्थः। तमेवाह ।

दिट्ठोवसमोसरणे, अहवा थेरा तहिं तु वच्चन्ति ।
परिसायघट्ठमट्ठा, चंदणखोर्मा करंटणेय ॥

यत्र समवसरणे ज्ञायते आचार्योऽत्र प्रवेदयति । तत्र गच्छोऽनुलोमवचसा प्रवेशनीयः । प्रविश्य तत्र गत्वाऽऽचार्यस्य कथयंति। त्वं सीदन् तिष्ठसि नैव च तद्युक्तं तस्मात् भवगत्या वर्तस्व।अथवा कुलानि हिंडमानाःस्थविराःसूत्रगच्छे व्रजंति तत्र दृष्टांतैः पर्षदसाधुपरिवाररूपा। घृष्टाः पादघर्षणात् मृष्टाः शरीरस्य केशादीनां च समारचनात् । तत स्तां तथारूपां पर्षदमवलोक्य चंदनखोर्मादृष्टांतेन खरंटना कर्तव्या साचैवम्

आयरिया दिट्ठंतमेगं सुणंति। एगोइंगालदाहओ इंगालकट्ठाइणं अण्णट्ठाए नदीकूलं गतोतत्थ पासइ । तम्मि ण वुज्झमाणं गोसीसचंदणखोमिं सो तं घेत्तूण पारंगितो तमंतरा वणीओ पासइ जाणइ एसा गोसीसचंदणखोमी। ततोतेण सो भणितो किं एएण कट्ठेण तं करिस्ससि । इंगालदाहगो भणइ । दहिऊण इंगाले घेच्छामि। वणिउचिंतिते । जइइत्ता हेत्ते च मज्झाहामीतो बहुमुकं मोल्लंकाहिति तो जाहे रुट्ठिओ माढवोहिति ताहे किणिहामि। एवं चिंतित्ता जाव वणिउ मुल्लस्स कएण घरं गंतु एति। तावत्तेण दिट्ठा गोसीसचंदणखोमी वाणिएण आगंतुं पुच्छितो । कहींतं कट्ठं सोभणइ। दड्ढंति। एवं भणिएण खिंसितो महाभाग फिडितोसि इसरियत्तणस्स एवं जहा सो इंगालदाहओ सोयवाणियउ ईसरियत्तणस्स चुको। एवं तुमंपि नाणादी दहंतो निव्वाणस्स चुकिहिसि ॥

एतदेवाह ॥

इंगालदाहखोमी, पवेसे दिट्ठाउ वाणिएणं ॥
तुज्झामुल्लं आणयए,इंगालट्ठाए तादिट्ठा ॥ १ ॥
इय चंदणरयणनिभा,पमाय तिक्खेण परसुणा भेत्तुं ॥
दुविहा सेवासिहिणा, तिरियणखोमि तुमे दड्डा ॥ २ ॥

अंगारान् दहतीति अंगारदाहस्तस्य पार्श्वे गोशीर्षचंदनखोमी प्रवेशग्रामप्रवेशे च वणिजा दृष्टा ।स च यावन्मूल्यमानयति। तावत्तेनांगारदाहकेनांऽगारार्थं सा खोमीर्दग्धा इत्यक्षरार्थः भावार्थस्तु प्रागेवोक्तः सांप्रतमुपनयमाह ॥ इयचंदणेत्यादि । इत्येवममुना प्रकारेण चंदनरत्ननिभा गोशीर्षचंदनसदृशात्रिरत्न रत्नत्रयरूपा खोमीप्रमादरूपेण तीक्ष्णेन परशुना भित्त्वा द्विधा या प्रतिसेवा मूलगुणप्रतिसेवा उत्तरगुणप्रतिसेवाचेत्यर्थः। सैव शिखी वैश्वानरस्तेन त्वया दग्धा एवं वारितः सन् यदि निवर्तते ततः प्रायश्चित्तं दत्वा तस्य वर्त्तापकाः स्थविरा दातव्याः। अथ न निवर्तते तर्हि तस्य गणोऽपहरणीयः। न केवलमेतेऽनर्हाः। किंचान्येऽपि तथा चाह ॥

एएण अणरिहेहिं, अन्ने इयसूइया अणरिहातो ॥
के पुणे ते इणमोत्त, दीणादिया मुणेयव्वा ॥

एतैरनंतरोदितैरनर्हैरन्येऽपि खलु सूचिता अनर्हाः। के पुनस्ते- सूरिराह। इमे ते वक्ष्यमाणा दीनादयो ज्ञातव्यास्तानेवाह ।

दीणाजुंगियचउरो, जातीकम्मे यसिप्पसारीरे ॥
पाणाडोंबा किणिया, सोवागा चेव जातीए ॥

दीनाःअनर्हाः कस्मादिति चेदुच्यते । तेषां नंदनाभावा दुकंच ॥

दीणाभासं दीणे, गतिं दीणजं पिउं पुरिसं ।
कं पेच्छासि नंदंतं, दीणाए दिट्ठिए तत्थ ॥

जुंगिका हीनाश्चत्वारोऽनर्हाः । तद्यथा जातौ कर्मणि शिल्पे शरीरे च। तत्रजातौ जुंगिकाश्चत्वारस्तद्यथा। पाणडोंबाः किणिकाः श्वपचाश्च। तत्र पाणानाम ये ग्रामस्य नगरस्य च बहि

नकारो वसंति तेषां गृहाणामभावात् । मौवा येषां गृहाणि संति गीतं च गायन्ति । किङ्किका ये वादित्राणि परिणयन्ति । वध्यानां च नगरमध्ये नीयमानानां पुरतो वादयंति । श्वपचा श्वां नाया ये शूनः पचन्ति । तंत्रीश्च विक्रीणन्तीति । एतेजातौ जुंगिका उपलक्षणमेतत् । नतायकल्लिका ये च ये च हरिकेशजा तयोमिया ये च वरुणादयस्तेपि जातौ जुंगिका द्रष्टव्याः। संप्रति कर्मणि शिल्पे च नानाविधिन्तुराह ॥

पोसगसंवरनट्टा, ल्लंघ वाहमच्छंधरयगवागुरिया ॥

पडगारा य परीसह, सिप्पे लगंरे य वुच्छामि ॥

पोषका ये स्त्रीकुक्कुटमयूरान् पोषयन्ति । संवरास्तानिकाः । शोधकाः नटाः प्रतीता ये नाटकानि नर्त्तयन्ति । लंखा ये वंशादेरुपरि वृत्तं दर्शयंति । व्याधा लुब्धका मत्स्यबंधाः कैवर्त्ता रजका वस्त्रप्रक्षालका वागुरिका मृगजालिकाजीविनः । एते कर्मणि जुंगिकाः । पटकाराः कुंचिकादयश्चर्म्मकारा इत्यपरे परीषहा नापिता एते शिल्पे जुंगिकाः ॥ संप्रति शरीरे तान् वक्ष्यामि प्रतिज्ञातं निर्वाहयति ॥

हत्थे पाए कन्ने, नासाउट्ठेहिं वज्जियं जाण ॥

वामणगमरूनकोभिया, काणा तह पंगुला चेव ॥

शरीरे जुंगिकाः जानीहि । हस्ते सप्तमी प्राकृतत्वात् तृतीयार्थे । एवं सर्वत्र । ततोऽयमर्थः । हस्तेन उपलक्षणमेतत् । हस्ताभ्यां वा वर्जितं एवं पादेन पादाभ्यां वा कर्णेन कर्णाभ्यां वा नासया ओष्ठेन वा वामनका हीनहस्तपादाद्यवयवाः । सूरुभाः कुब्जाः कुष्ठव्याप्युपहताः काणाः एकाक्षाः । पंगुलाः पादगमनशक्ति विकला एतानपि शरीरे जुंगिकान् जानीहि ॥

दिक्खेउंपि न कप्पंति, जुंगिया कारणेत्ति दोसोवि ॥

असादिक्खिएवा, ताउं न करेंति आयरिए ॥

एते अनंतरोदिताश्चत्वारोऽपि जुंगिका दीक्षितुमपि न कल्पंते किंपुनराचार्यपदे स्थापयितुमित्यपि शब्दार्थः । कारणे तथाविधे समुत्पन्ने दोषका निर्दोषा वा दीक्षितुमपि संवध्यंते । अज्ञाताश्चेत्कथमपि जुंगिका दीक्षिता भवेयुः ततस्तान् अज्ञात दीक्षितानज्ञात्वा कुर्वत्याचार्यगुणोपेतानप्याचार्यान् प्रवचनहेलनाप्रसक्तेः ॥

पच्छावि होंति विकला, आयरियत्तं न कप्पइ तेसिं ॥

सीसो ठावेयव्वो, काणगमहिसो व निन्नम्मि ॥

पश्चादपि श्रामण्यस्थिता अङ्गिगलनादिना विकला भवंति । तेषामप्याचार्यगुणैर्युक्तानामप्याचार्यत्वं न कल्पते । येऽप्याचार्यपदोपविष्टास्संतः पश्चाद्विकला जायंते । तेषामपि न कल्पते धारयितुमाचार्यत्वं । किंतु तैस्तया विकलैः सद्भिरात्मनः पदे शिष्यःस्थापयितव्यः । आत्मत्वे प्रकाशे स्थापयितव्यः । क इवेत्यत आह । काणकमहिष इव । निम्ने । इयमत्र भावना । काणकोनाम चोरितमहिषो माकोऽप्येन मद्राक्षीदिति हेतोर्ग्रामस्य नगरस्य वा बहिर्गर्तरूपे निम्ने प्रदेशे उपलक्षणमेतदिति गुपिले वा वनगहने स्थाप्यते । एव मेषो ऽप्यन्यथा च प्रवचनहीलनाप्रसक्तेराज्ञादिदोषप्रसंगश्च । अथ यो वाऽऽत्मीयः शिष्यः पश्चाद्विकलैराचार्यैः स्थाप्यते । स कीदृश इत्यत आह ॥

गणि अगणी वागीतो, जोवि अगीतोवि या गईमन्तो ।

लोगे स पगासिज्जइ, तहावेन्ति नक्खिमियरस्स ॥

गणोऽस्यास्तीति गणी साधुपरिवारवान् यो वर्तते तदभावे अगणी । वा यो गीतो गीतार्थः कालोचितसूत्रार्थपरिनिष्ठितः तस्याऽप्यभावे योवाप्यगीतोऽप्यगीतार्थोऽपि आकृतिमान् रूपेण मकरध्वजतुल्यः स गणधरपदे निवेश्यते । यथाऽयमस्माकमाचार्यो नेतर इति । केवलमितरस्याऽपि जुंगिकाचार्यस्य यत्कृत्यं तत्स्थविरा अन्येऽपि च न हापयंति सर्वमपि कृत्यं कुर्वतीति भावः । संप्रत्यनर्हान् प्रतिपादयिपुरिदमाह ॥

एयदोस विमुक्कावि, अणरिहा होंति सेवअसोवि ॥

अव्वावाधादीया, तेसिं विभागो उ कायव्वो ॥

एतैरनंतरोदितैर्दोषैर्विमुक्ता अपि भवंत्यन्ये इमे अनर्हाः । के ते इत्याह । अत्याबाधादयस्ततस्तेषामत्याबाधानां विभागः पार्थक्येन स्वस्वरूपवर्णनं कर्त्तव्यं । प्रतिज्ञातमेव निर्वाहयाति ॥

अव्वावाध अवायन्ते, नेच्छइ अप्पचिंतए ॥

एगपुरिसे कहं निंदू, काकवञ्झा कहं नवे ॥

( अव्वावाधेत्ति ) अत्यावाध ( आवाएतोत्ति ) अशक्नुवन् (नेच्छत्ति) नेच्छति अनिच्छन् तथा आत्मचिंतकः एते चत्वारोऽपिपुरुषा अनर्हाः न केवलमेतेऽनर्हाः किंत्वेकपुरुषादयोऽपि तत्र शिष्यः प्राह । कथमेकपुरुषो भवति । कथं वा निंदूः कथं वा काकी कथं वा वंध्येति । एवं शिष्येण प्रश्ने कृते सूरिः सकलविनेयजनाऽनुग्रहप्रवृत्तः सर्वानप्यत्यावाधादीन् व्याख्यानयति ॥

अव्वावाधो वाहइन, मञ्झविवितिधरेत्तमसमत्थो ॥

तइओन चेवं इच्छइ, तिण्णि ए ए अणरिहातो ॥

अतिशयेन आवाधा यस्य सोऽत्यावाधः। स गच्छस्य द्विविधेऽप्युपग्रहे वस्त्रपात्रादिज्ञानाद्युपष्टंभरूपे कर्तव्ये बाधां मन्यते द्वितीयोऽशक्नुवन् गणं धारयितुमसमर्थः द्विविधमप्युपग्रहं गच्छस्य कर्तुमशक्त इत्यर्थः। तृतीयोऽनिच्छन् समर्थोऽप्यात्मस्वेन गणं धारयितुं नेच्छति । एते त्रयोऽप्यनर्हाः॥

आत्मचिंतकमाह ॥

अव्वुज्जयमेगयरं, पडिवज्जिस्ससंते अत्तचिंतो उ ॥

जोवा गणे वसंतो, न वहति तत्तीतो अन्नेसिं ॥

आत्मानमेव केवलं चिंतयन् मन्यते यद्वाऽहमभ्युद्यतं जिनकल्पं यथा लंदकल्पानामेकतरं प्रतिपत्स्ये इति । आत्मचिंतकः योऽपि गणेऽपि गच्छेऽपि वसन् तिष्ठन् न वहति न करोति तप्तिमन्येषां साधूनां सोऽप्यात्मचिंतकः । एतौ द्वावप्यात्मचिंतकावनर्हौ ॥

एगं मज्जति सिस्सं, पणद्धे मरंति विद्धसंते वा ॥

अन्नमयरस य एवं, नवरं पुणय एए गो पणत्ति ॥

पंचम एकपुरुष एकं शिष्यं मृगयते सहैवं चिंतयंति । किमप्येकमात्मनः सहायं मृगयामि । येन सुखं तिष्ठामीति तया कष्टे निंदूतुल्याः शिष्या म्रियंते विध्वंसते वा प्रतिभज्यंते वेति भावार्थः । इयमत्र भावना । यथा निंदूमहिला यद् यदपत्यं प्रसूते तत्तन्म्रियते । एवं योऽपि यं प्रव्राजयति स स म्रियते अपगच्छति वा ततः स निंदूरिव निंदू । सप्तमस्यापि काकीतुल्यस्य एवमेव द्रष्टव्यं । नवरं पुनरेकं तिष्ठति किमुक्तं भवति। यस्यापि यः शिष्यः स म्रियते विध्वंसते वा केवलमेकः तिष्ठति । उपलक्षणमेतत् । न चैतदपि द्रष्टव्यं । यस्यैकस्मिन्

प्रव्राजिते सति द्वितीयविषये वृद्धिरेव नास्ति स काकीव काकी काक्यपि हि किलैकं वारं प्रसूते इति प्रसिद्धिः। वंध्यातुल्यः सुप्रतीत इति न व्याख्या तदेवेदं व्याख्यानं। वंध्या किलाप्रसवधर्मा एवं यस्य नैकोऽपि शिष्य उपतिष्ठते। स वंध्येव वंध्येति। पुनरन्यानानर्हान् प्रतिपादयिषुरिदमाह ॥

अहवा इमे अणरिहा, देसाणं दरिसणं करेंतेण॥
जेपव्वावियतेणं, थेरादि पयच्छति गुरुएणं ॥

अथवेति। अनर्हाणामेव प्रकारांतरतोपदर्शने इमे वक्ष्यमाणा अनर्हास्तानेवाह। देशानां दर्शनं कुर्वते। तेन ये प्रव्राजिकाःस्थविरादयस्तान् प्रयच्छंति गुरूणां न तरुणादीन् पूर्वं बहुवचनमनेकमप्यपेक्ष्येत्यदोषः। स्थविरादीनेवाह।

थेरे अणरीहे सीसे, खज्जूहे एगलंभिए ॥
उक्खोवगयत्तिरिए, पये कालगते इय ॥

यःस्थविरान् प्रयच्छति शिष्यान् यो वानर्हान् योवा खज्जूरान् यदि वा एकलांभिकानथवा य एकं प्रधानं शिष्यमात्मना लभते गृह्णाति शेषाँस्त्वाचार्यस्य समर्पयति। स एकलाभेन चरतीति एकलाभिकः। यो वा शिष्याणामुत्क्षेपको यथाचार्यागामत्वरिकान् शिष्यान् करोति। योवा गुरुसंबंधिनः शिष्यान् पथि कालगतान् चशब्दात् प्रतिभग्नान् कथयति। एते सर्वेऽप्यनर्हास्तत्र स्थविरादीन् व्याख्यानयति ॥

थेराउ अतिमहल्ला, अणरिहा काणकुंटमादीया ॥
खज्जूराय अवस्ता, एगालंभी पहाण उ ॥ १ ॥
तं एगं न वितीअ, विसेसे देइ जे गुरुणत्तु ॥
अहवा वि एगदव्वे, लभंति जे ते देइउगुरूणं ॥ २ ॥

स्थविरानाम अतिमहांतो वयसाऽतिगरिष्ठा इत्यर्थः। अनर्हाः काणकुंटादयः खज्जूरा अवश्याः। अयमत्र भावार्थः योऽसौ पूर्वं परीक्षितः स देशदर्शनं कार्यते। तेन च देशदर्शनं कुर्वता यदि ये स्थविराः प्रव्राजिता ये च जुंगिका ये च खज्जूरा वा ते आचार्यस्य समर्प्यंते तदा न व्यङ्गा विनीताश्चात्मनस्तदा सोऽनर्ह इति। एगलाभिनां यः प्रधानः शिष्यस्तमेकं योन ददाति अवशेषांस्तु सर्वानपि प्रव्राजितान् गुरूणां प्रयच्छति। अथवा येषामेकएव लाभो यथा यदि भक्तं लभंते ततो वस्त्रादीनि न अथ वस्त्रादीनि लभंते तर्हि न भक्तमपि एकमेव लभंते इत्येवं शीला एकलाभिनस्तथा चाह। अथवा ये एकं द्रव्यं लभंते तान् शिष्यान् गुरूणां यः प्रयच्छति। उभयलब्धिकानात्मनः संबंधयति सोऽप्यनर्हः ॥

उक्खोवणं देतिनि वा, विउवणाति से समप्पणो ॥
आयरिया णित्तिरियं, बंधइ दिसमप्पणो वकहिं ॥

इयं किल समाचारी यावंतः किल देशदर्शनं कुर्वता प्रव्राजिताः तावंतः सर्वे गुरूणां समर्पणीयाः यस्तु प्रव्राजितान् द्विधा कृत्वा उत्क्षेपेण हस्तोत्पाटनेन द्वौ त्रीन् वा शिष्यान् गुरूणामुपनयति शेषान् सर्वानप्यात्मना गृह्णति एषो क्षेपकोऽनर्हः ॥

तथा ये के च न देशदर्शनं कुर्वता प्रव्राज्यंते ते सर्वेऽप्यात्मन इत्वरिका बंधनीयाः। यथा आचार्यसमीपं गता यूयं सर्वेऽप्याचार्यस्य यत्पुनराचार्याणां दिशमित्वरिकां बध्नाति। आत्मनस्तु यावत्कायिकां यथा यावत् यूयमाचार्यसमीपे तिष्ठत तावदाचार्यसकाः शेषकालं ममेत्येवमित्वरिकान् कतिशिष्यान् सोऽप्यनर्हः ॥

पथंमियकालगया, पभिनज्जा वावितुब्भ जे सीसा।
एए सव्वे अणरिहा, तप्पभिवक्खा भवे अरिहा॥

यो देशदर्शनं कृत्वा समागतः सन् ब्रूते युष्माभिर्दत्ताः साधवः परिवारतया ते सर्वे युष्माकं शिष्याः पथि कालगताः प्रतिभग्ना वा इमे पुनः सर्वे मम शिष्या एते स्थविरादयोऽनर्हाः तेषां पुनरनर्हाणामाचार्यसमीपगतानां ये तैः प्रव्राजिता शिष्यास्तानाचार्य इच्छापयति वा न वा गुरूणामत्रेच्छाप्रमाणः॥ व्य. १ खं. ३ उ. ॥

( २७ ) उद्देशः मैथुनादिप्रतिसेव्याचार्यत्वे न ॥

मैथुनप्रतिसेवने त्रिवर्षाभ्यन्तरे आचार्यत्वन्न कल्पत इत्यत्र प्रमाण ( मुद्देस ) शब्दे।

( २८ ) स्थापनाविधिराचार्यपदे गुरोः ॥

आचार्यपदेऽन्यस्थापनाविधिश्च ॥

कहंणंभंते!आयरियस्स ठवणाविही।वियाहिया जंबू! जे आयरिया विहिपुव्वं ममाउआयरियेणं पट्ठाविया तेवि आयरिया तत्थ एगे नामायरिया दव्वायरिया ठवणायरिया भावायरिया। जंबू! जे भावायरिया ते तित्थयरसमा। अहवा तउ आयरिया पण्णत्ता सिप्पायरिया कलायरिया धम्मायरिया जे ते धम्मायरिया परलोगगहियट्ठाए निजरट्ठाए आराहेयव्वा। अन्ने कलायरिया सिप्पायरिया एकइएहिं कित्तबुद्धिए आराहियव्वे। तत्थेगे धम्मायरिया सोवायकरंडसमा वच्छाइकथयप्पयगाहाईहिं जे सुच्छसज्जाए वखाणिंति ते सोवागकरंडसमा। वेसाकरंडसमाजो रीआहारणसरिसजीहावक्खाणरुवेरेणं अंतरं सुत्तसारविरहिया विसुच्छसज्जाए जणं विमोहिंति णेरविंति अप्पाणं युतंसि आलुच्च अणत्थे पाडिंति गोयमा! गणहराणं उवमाएतेवेसाकरंडसमा गाहावइकरंडसमा जे सम्मं समुवसियसुगुरुहितो संपत्त अंगोवंगाइसुत्त ये सुपरिच्छियच्छेयगंथा सयसमयपरसमयणिच्छया परोत्तयाकरणिक्कलद्धिच्छया जणजोगविहीए अणुओगं करिंति। ते गाहावइकरंडसमा रायकरंडसमा जे गणहरा चउदसपुव्विणोवा घडाओ घडसयं पडाओ पडसयं इच्चाइं विहाइं सयसमणिया ते रायकरंडसमा गाहावइकरंडसमाणे रायकरंडमाणे दोविए आयरिए तित्थयरसमाणे तेसिं ठवणविहि गाहावंधो ॥

जइगुण १ काल २ णिसिज्जा ३ विज्ज ४ चंदु ५ लग्गा ६ नंदि ७ सगच्छोना ८ मंत ९ रक्ख १० णाम ११ वंदण १२ अणुसट्ठि १३ निरुद्ध १४ गणगुन्ना १५ संगा १६ संगहणीगाहा ॥

अउनरिसदिक्खवासु, सुत्ते अत्थे य वायगत्तेय ।

पणयाल्लीसपरिसगुण, जुत्तोसूरिपयजुग्गे ॥ २ ॥
देसकुलं पसिद्धि, उत्तीसगुणगणालंकिओ दढचरित्ते ।
जयणाजुत्तो संघस्स, सम्मओ मुक्खकंखी य ॥ ३ ॥
कोइलाइव साइकाइ, गुणविहीणो विसुद्धगीयत्थो ॥
ठाविज्जइ सूरिपए, उज्जुत्तो सारणाइसुं ॥४॥
मूलगुणभावे न पुणो, गुणपरिहाणी ठविज्जए सूरी ॥
भंपते सूरिपयं, दिंतस्स गुरुस्स गुरुदोसो ॥ ५ ॥
जउत्तंवृद्धो गणहरस्स, दोगोयमाईहिं धीरपुरिसेहिं ॥
जोतं ठवइ अपत्ते, जाणंतो सो महापावो ॥ ६ ॥
कहं नासेइ अगीअत्थो, चउरंगं सव्वलो असारंगं ॥
नट्ठभिअ चउरंगेण, हु सुलहं होइ चउरंगं ॥ ७ ॥
नासेइ संवेगो, चउरंगं सव्वओ य सारंगं ॥
नट्ठंमिय चउरंगेण, हु सुलहं होइ चउरंगं ॥ ८ ॥

एयाए विहीए सुसीसस्स परिक्खा काऊण दुसमसमया-णुभावेणं पसत्थे विहिनक्खत्तमुहुत्ते गहिए पाभाइअकाले पट्ठविए गुरुसीसे सिज्जाए करित्ता पसत्थजिणभवणाइखित्ते अक्खए गुरुजुगे निसिज्जादुगे कातव्वे अणुओ-गाणुण्णवणत्थं कियलोयस्स सीसस्स सिरे गुरुणो वासं धे ति मंतिऊण सीसे खिवति। सुसीसस्स से तओ पुव्वविहीए देवे वंदावेइत्ता अणुओगाणुण्णवणत्थं काउस्सग्गं किरइ। सत्तावीसुस्सा संदुवेवि गुरुसीसा तओपयमं चउवीसं थुतं पभित्ता वाराचिगं पंचमंगलुच्चारं करेंति ।सुष्ठुट्ठिया । गुरु अन्नोवा अक्खलियाइगुणोपवेयं नंदिसुत्तं कड्ढेइ । वुड्ढसीसो अहोणयकायउजोरीरुयकरकमलकुमलोपवड्ढमाणसंवेगो सुणेइ। तओ सीसो वंदितो भणेइ इच्छयारिंभंते!तुम्हेअणुओगं जाणह तओ गुरु भणइ अहमेअस्स साहुस्स दव्वगुणपज्जवेहिं खमासमणाणं हत्थेणं अणुओगं अणुजाणामि विए संदिसह किं भणामि । वंदित्ता पवेएह तइए इच्छयारि तुम्हे अम्हं अणुओगो अणुण्णाउं । इच्छामो अणुसट्ठिंति सीसेण भणिए गुरु भणइ । संम्मे अवहारे यव्वं अन्नेसिं पवेयहचउत्थे तुह्माणं पवेइयं संदिसह साहूणं पवेएमि पंचमेय इक्कणमुक्कारेण समोसरणं च गुरुं च पयक्खिणेइ एवं तिन्नि वारा छट्ठेण तुम्हाणं पवेइउ साहूणे पवेइऊं संदिसह काउस्सग्गं करेमि । सत्तमे अणओगाणुजाणावणियं करेमि काउस्सगमिच्चाइणा उवसग्गे कए गुरुसमप्पिय णिसिज्जा जुओ गुरुं तिपयक्खिणीकरिय वंदित्ता गुरुदाहिणओ उच्चआसन्ने निसिज्जाए णिसीअइ। तउ णिसन्नस्स लग्गवेलाए दाहिणसवणे गुरुपरंपरा गयमंतपए तिन्निवारे परिकहेइ। तओ वड्ढतिया उ तिन्निअक्खमुट्ठिओ देइ करयलपुमे सीसो ताउ उवउत्तो गिह्णइ। तओ गुरू तस्स नामं करिय णिसिज्जाउ उट्ठेइ। सीसो तत्थ णिसीयइ अहा सन्निहीयसंघसहिओ गुरू तस्स वंदणं देइ। इयं च तुल्यगुणाख्यापनार्थमुभयोरपिन दोषाय। यदाह। आयरियनिसिज्जाए उवविसणं वंदणं च तह गुरुणो तुल्लगुणाक्खायणत्थं ण तया दुट्ठं दुवण्हं पितउ वक्खाणं करेइत्ति। गुरुणा वुत्ते तत्थट्ठिओ चेत्र अहिणवसूरी नंदिमाइयं परिसाणुरूवं वा वक्खाणं करेइ। तस्सम्मतीए य संघो तं वंदइ। तओसोवि णिसिज्जाउ उट्ठेइ गुरुो तत्थ णिसित्ता उववूहंति। यथा आयणीपुव्वे दसमसिलोगबंधेण सिक्खा दिंति।

नमोऽर्हत्सिद्धाचार्य्योपाध्यायसर्व्वसाधुभ्यः ।
यथा । धन्यस्त्वं येन विज्ञात, स्संसारगिरिदारकः ॥
वज्रवद्दुर्भिदश्चायं, महाभाग ! जिनागमः ॥ १ ॥
इदं चारोपितं यत्ते, पदं तत्संपदां पदम् ॥
श्रीगौतमसुधर्म्मादि, मुनिसिंहनिषेवितम् ॥ २ ॥
धन्येभ्यो दीयते भद्र, ! धन्या एवास्य पारगाः ॥
धन्या गत्वाऽस्य पारन्तु, पारं गच्छंति संसृतेः ॥ ३ ॥
भीतं संसारकांतारा, त्साधुवृन्दमिदं मुदा ॥
विमोचने समर्थस्य, भवतश्शरणागतं ॥ ४ ॥
अतो विधेयं यत्नेन, सारणावारणादिना ॥
अपायपरिहारेण, संसारारण्यपारगं ॥ ५ ॥
एवं तं उववूहिअ विणेयजणोवि अणुसासियव्वो। यथा।
गुर्व्वाभिरपि नैवेष, सुरयबोधिस्यसन्निभः ॥
संसारसागरोत्तारी, विमोक्तव्यः कदाचन ॥ १ ॥
मतिकूलत्र कर्तव्य, मनुकूलरतैः सदा ॥
भाव्ययस्य गृहत्यागो, येनवस्सफलो भवेत् ॥ २ ॥
अन्यथा लोकबंधूना, माज्ञालोपः कृतो भवेत् ॥
ततो विडंबना घोरा, भवेदिह परत्र च ॥ ३ ॥
ततः कुलवधून्यायात्, कार्य्ये निर्भर्त्सितैर पे ॥
यावज्जीवं न मोक्तव्यं, पादमूलममुष्य भोः ॥ ४ ॥
ते ज्ञानभाजनं धन्या, स्तेहि निर्म्मलदर्शनाः ॥
ते निष्प्रकंपचारित्रा, ये सदा गुरुसेविनः ॥५ ॥

इदं अणुसट्ठिं काउं दोवि णिरुद्धं करेंति दोविसज्झायस्स कालस्सय पडिकमंति । आयरियं पंचएए अइसया ववहारगत्थे अभिहिया ॥
भत्ते पाणे धोवणए, पसंसणा हत्थपायसोए य ॥
आयरियअइसेसा, णाइसेसा होंत णायरिया ॥ १ ॥
उप्पन्ननाणा जहनो अभंती, चुत्ती सबुद्धा इसया जिणिंदा।
एवं गणी अट्ठगुणोववेओ, सत्थावनो हिंरुइ इट्ठमं तु ॥२।
गुरुहिं रुणामि गुरुगा, वसन्ने लहुगा णिवारयंतंमि ॥
गीयागीयगुरुलहु, आणाइआ वहूदोसा ॥ ३ ॥

पंचविश्रायरियाइ,यच्छंति जहन्नए वि संथरणे ॥
एवं पसत्थरंतो, सयमेव गणी अग्गइ गामे ॥ ४ ॥

इच्चाइगुणजुत्तस्स दुच्चेट्ठवियारियस्स वा गणानुज्ञां करोति । तत्थय सकरुणो पवयणाणुरागीय एवं वि खमासणपुव्वं सीसो भणइ । इत्थयारि तुम्हे अम्हदिगाइ अणुजाणावणियं नंदिकारावणियं वासणिक्खेवं करेह इच्चाइ पुव्वुत्तविहीए चेइवंदणं चेइवंदणपुव्वं काउसग्ग करणं नंदिसुत्तस्स कड्डणं गंधदाणं सत्तखमासणदावणं तओ उस्सग्गाणंतरं सूरिसमीवे उवच्चिाट्ठियस्स अभिणवगणहरस्स साहुणीओ वंदणयं दिंति । तओ तस्सायरियस्स सीसे हत्थं दाऊणं सासणं देइ ॥ तंजहा ।

संपारिऊण परमे,नाणाइ दुविहियतायणसमत्थो॥
भवजयभयािणदढं,ताणं जो कुणई सो धन्नो ॥ १ ॥
अत्ताणवाहिगाहिया, जइवि न सम्मं इहातुरा हुंति ॥
तहवि पुण भावविज्जा, तेसिं अवणंति तंवाहिं ॥ २॥
तातंसि भावविज्जो, भवदुक्खनिवरुियातुम्हं ॥
एए हंदिसरणं, पवन्ना मोएयव्वा पयत्तेणं ॥ ३ ॥
गच्छस्स सिक्खिदाणं पुण एवं ॥
तुब्भेहिं पिण एसो, संसाराम्वविमहाकम्मीद्धंमि ॥
सिद्धिपुरसत्थवाहो, जत्तेण सया ण मुत्तव्वो ॥ ४ ॥
नाणस्स होइ भागी, थिरयरओ दंसणे चरित्तेय॥
धन्ना आवकहाए, गुरुकुलवासं ण मुंचान्ति ॥ ५॥
एवंचिय समणीणं, अणुसर्ट्ठि कुणइ इत्थ आयरिओ।
तह अजचन्दणमिगावइ, णासा होइ परमगुणा ॥ ६ ॥
एवं ठवणविहीए, ठविया जे हवन्ति आयरिया ॥
विहिवहिया अणायरिया, भणिया सिरिवीरणाहेणम्
॥ ७ ॥ अंग. चू. । ध. ३ अधि. ॥

नूतनाचार्य्यस्थापनविधिर्गुरुशिष्ययोरनुशासनं च पंचवस्तुके यथा ॥

एत्थाणुजाणणविही, सीसं काऊण वामपासम्मि।
देवे वन्देइ गुरू, सीसो वन्दिओ तो भणइ ॥ ३६ ॥

व्याख्या ॥ अत्र प्रक्रमे अनुज्ञाविधिरयं शिष्यं कृत्वा वामपार्श्वे आत्मनः देवान्वन्दते । गुरुराचार्य्यश्शिष्यो वंदित्वा अत्रांतरे ततो भणति वक्ष्यमाणमिति गाथार्थः ॥ ३६ ॥

इच्छाकारेणम्हे, दिसाइ अणुजाणहत्ति आयरिया।
इच्छामोत्ति भणित्ता, उस्सग्गं कुणइओ तयत्थं ॥ ३७॥

व्याख्या। इच्छाकारेण स्वेच्छया क्रियया ऽस्माकं दिगाद्यनुजानीतेति भणति अत्रांतरे आचार्य इच्छामि इति भणित्वा तदनंतरं कायोत्सर्गं करोति तदनन्तरं दिगाद्यनुज्ञार्थमिति गाथार्थः॥

चउवीसत्थयनवकार,पारणं कट्टिउयं ताहे ।
नवकारपुव्वयं चि अ, कड्डइ अणुण्णंदित्ति ॥ ३८ ।

व्याख्या। चतुर्विंशतिसूत्रपाठनमस्कारपारणं नमोरिहंताणमित्येवमाकृष्य पठित्वा स्तवं पूर्वोक्तं ततो नमस्कारपूर्वकमेवाकर्षति । पठत्यनुज्ञानंदीमिति गाथार्थः ॥

सीसो वि भाविअप्पा, सुणेइ जहं वंदअं पुणो भणइ ।
इच्छाकारेणम्हं, दिसाइ अणुजाणह तहेव ॥ ३९ ॥

व्याख्या । शिष्योऽपि भावितात्मा सन् शृणोत्युपयुक्तः अथ वंदित्वा पुनर्भणति शिष्यः । इच्छाकारेणास्माकं भगवन् ! दिगाद्यनुजानीत तथैव भणतीति गाथार्थः ॥

आह गुरु खमासमणं, हत्थे णिम्मस्स साहुस्स।
अणुजाणिअं दिसाई, सीसो वंदित्तुतो भणइ॥ ४० ॥

व्याख्या । आह गुरुस्तत्रांतरे क्षमाश्रमणानां हस्तेन स्वमनीषयाऽस्य साधोः प्रस्तुतस्यानुज्ञातं दिगादिप्रस्तुतं शिष्यो वन्दित्वा अत्रांतरे ततो भणति वक्ष्यमाणमिति गाथार्थः ॥

संदिसह किं भणामो, वन्दितु पवेअह गुरू भणइ ।
वंदितुपवे अयई, भणइ गुरुतत्थ विहिणाओ ॥ ४१ ॥

व्या. ॥ सन्दिशति किं भणामि अत्र प्रस्तावे वंदित्वा प्रवेदयैवं गुरु र्भणति वंदित्वा प्रवेदयति शिष्यो भणति गुरुस्तत्रविधिना तु वक्ष्यमाणमिति गाथार्थः ॥

वंदितु भणइ तुम्हं, पवेइयं संदिसह साहूणं ।
एवं सीसोभणइ, भणइ गुरू पवेयइ तओउ ॥ ४२ ॥

वंदित्वा भणति ततः किमित्याह। युष्माकं प्रवेदितं संदिशत साधूनां प्रवेदयामि एवं भणति शिष्यः । अत्रांतरे गुरुराह प्रवेदय ततस्तु तदनंतरमिति गाथार्थः । किमित्याह वंदित्वा भणति ततः किमित्याह । युष्माकं प्रवेदितं संदिशत साधूनां प्रवेदयामि एवं भणति शिष्यः । अत्रान्तरे गुरुराह । प्रवेदय ततस्तु तदनन्तरमिति गाथार्थः ॥ किमित्याह ॥

वन्दितु णमोकारो, कट्टंतो से गुरुं पयक्खिणइ ॥
सो विअ देवाईणं, वासो दाऊण तो पच्छा ॥ ४३ ॥

व्या. ॥ वंदित्वा नमस्कारमाकार्षं सशिष्यो गुरुं प्रदक्षिणी करोति सोऽपिच गुरुर्देवादीनां वासान् दत्वा ततस्तदनन्तरं पश्चादिति गाथार्थः ॥ किमित्याह ॥

सीसंमि पक्खिवन्तो, भणइ तं गुरु गुणेहिं वट्टाहिं ।
एवं तु तिन्निवारो, उववसिइ तओ गुरूपच्छा ॥ ४४ ॥

व्याख्या । शिरसि प्रक्षिप्त्वा तान् भणति तं साधुं गुरुगुणैर्वर्धस्वेति एवमेव त्रीन् वारानेतदुपविशति । ततस्तदनंतरं गुरुः पश्चादिति गाथार्थः ॥

सेसं जह सामइए, दिसाइ अणुजाणणाणिमित्तंतु ।
णवरं इह उस्सग्गो, उवविसइ तओ गुरुसमीवे ॥ ४५ ॥

व्या. शेषं प्रादक्षिण्यादि तथा सामायिके तद्वैव द्रष्टव्यं दिगाद्यनुज्ञानिमित्तं तु नवरमिह कायोत्सर्गो नियमतएव उपविशति ततो गुरुसमीपे स साधुरिति गाथार्थः ॥

दिंति अ नो वंदणयं, सीसाइ तओ गुरू वि अणुसर्ट्ठि ।
दोण्हवि करेइ तह जह, अण्णोवि अबुझई कोई ॥ ४६ ॥

व्या. ददति च ततो वंदनं शिष्यादयः सर्वे एव ततो गुरुरप्यनुशास्ति मौवः द्वयोरपि गच्छगणधरयोः करोति। तथा संवेगसारं यथाऽन्योपि च सत्वो बुध्यते कश्चिदिति गाथार्थः ॥

गणधरानुशास्तिमाह ॥

उत्तममिश्रं पयं, जिणवरेहिं लोगुत्तमेहिं पएणत्तं।
उत्तमफलसंजणयं, उत्तमजणसेविश्रं लोए ॥ ४७ ॥

व्या. उत्तममिदं गणधरपदं जिनवरैर्लोकोत्तमैर्भगवद्भिः प्रज्ञप्तमुत्तमफलसंजनकं मोक्षजनकमित्यर्थः । उत्तमजनसेवितं गणधराणामुत्तमत्वाल्लोक इति गाथार्थः ॥

धएणाण णिवेसिज्जइ, धएणागच्छंति पारमेअस्स ।
गन्तुं इमस्स पारं, पारं वच्चंति दुक्खाणं ॥ ४८ ॥

व्या. धन्यानां निवेश्यते एतद्धन्या गच्छंति पारमेतस्य विधिना परंपारं व्रजंति दुःखानां । सिध्यंतीति गाथार्थः ॥

संपाविऊण परमे, णाणाई दुक्खिय तायणसमत्थे ।
भवभयभीआणे दढं, ताणं जो कुणइ सोधन्नो ॥४९॥

व्या. संप्राप्य परमान् प्रधानान् ज्ञानादीन् गुणान् दुःखित त्राणसमर्थान् । किमित्याह । भवभयभीतानां प्राणिनां दृढं त्राणं यः करोति सधन्यो महासत्व इति गाथार्थः ॥

अएणाणवाहिगहिश्रा, जइवि न सम्मं इहाउरा होंति ।
तहवि पुणभावविज्जा, तेसिं अवणिंति तंवाहिं ॥ ५० ॥

व्या० ॥ अज्ञानव्याधिगृहीताः सन्तो यद्यपि न सम्यगिहातुरा भवंति व्याधिदोषात्तथापि पुनर्भाववैद्यास्तात्विकास्तेषामप नयंति व्याधिमज्ञानलक्षणमिति गाथार्थः ॥

तातंसि भावविज्जा, भवदुक्खनिपीमिया तुहंएए ।
हंदिसरणं पवएणा, मोएअव्वा पयत्तेणं ॥ ५१ ॥

व्या० ॥ त्वमसि भाववैद्यो वर्तसे भवदुःखनिपीडिताः संत स्तवैते साध्वादयः हंदिसरणं प्रपन्नाः प्रव्रज्यादिप्रतिपत्या मोचयितव्याः प्रयत्नेन संम्यक्त्वकारणेनेति गाथार्थः ॥

मोएइ अप्पमत्तो, परहिअकरणंमि णिच्चमुज्जुत्तो ।
भवसोक्खापमिबद्धो, पमिबद्धो मोक्खसोक्खंमि ॥५२॥

व्या० ॥ मोचयति चाप्रमत्तः सन् परहितकरणे नित्योद्युक्तो य इति । भवसौख्याप्रतिबद्धोनिस्पृहः। प्रतिबद्धो मोक्षसौख्ये नान्यत्रेति गाथार्थः ॥

ताएरिसो वि अतुमं, तह वि अ भणिओ सिसमयणीईए।
णिअयावत्थासरिसं, भवयाणिच्चं पि कायव्वं ॥५३ ॥

व्या. । तदीदृश एव त्वं पुण्यवांस्तथापि च भणितोऽसि मया समयनीत्या करणेन निजावस्थासदृशं कुशलमेव भवता नित्यमपि कर्तव्यं नान्यादिति गाथार्थः । गच्छानुशास्तिमाह ।

तुब्भेहिं पि न एसो, संसाराडविमहाकमिल्लंमि ।
सिद्धिपुरसत्थवाहो जत्तेण खणंपि मोत्तव्वो ॥ ५४ ॥

व्या० युष्माभिरपि नैष गुरुः संसाराटवीमहाकडिल्ले गहने सिद्धिपुरसार्थवाहःतत्रानपायनयनादयत्नेन क्षणमपि मोक्तव्यो नेति गाथार्थः ॥

ण य पमिकूलेअव्वं, वयणं एअस्स नाणरासिस्स ।
एवं गिहवासचागो, जं सफलो होइ तुम्हाणं ॥ ५५ ॥

व्या. ॥ न च प्रतिकूलयितव्यमशक्त्या वचनमेतस्य ज्ञानराशे र्गुरोरेवं गृहवासत्यागः प्रव्रज्यया यत्सफलो भवति युष्माक माज्ञाराधनेनेति गाथार्थः ॥

इहरा परमगुरूणं, आणाभंगो निसेविउ होइ ।
विहला य होंति तं मि, निअमाइइलोअपरलोआ॥५६॥

व्या. ॥ इतरथा तद्वचनप्रतिकूलत्वेन परमगुरूणां तीर्थकृतामाज्ञाभंगो निषेधितो भवति । निष्फलौ च भवतस्तस्मिन्नाज्ञाभंगे सति नियमादिहलोकपरलोकाविति गाथार्थः ॥

ताकुलवहुणाएणं, कज्जे निब्भच्छिएहिं विकाहिंवि ।
एअस्स पायमूलं, आमरणंतं न मोत्तव्वं ॥ ५७ ॥

व्याख्या । तत्कुलवधूज्ञातेनोदाहरणेन कार्ये निर्भर्त्सितैरपि सद्भिः कथंचिदेतस्य गुरोः पादमूलं समीपमामरणांतं न मोक्तव्यं सर्वकालमिति गाथार्थः । पं. व. ४ द्वा. ॥

नूतनाचार्यस्थापने गुरुशिष्ययोरनुशासनं ( जिनकाल्पिक ) शब्देऽपि ॥

( २७ ) परिच्छदसहितस्यैवाचार्य्यत्वम् ॥

आचार्यस्य गणधारणे परिच्छदावश्यकता । तथा च व्यवहारसूत्रम् ॥

भिक्खू इच्छेज्जा गणं धारित्तए भगवं च से अपलिच्छि एणएवं सेनो कप्पइ गणं धारित्तए भगवं च से पलि च्छन्ने एवं से कप्पइ गणं धारित्तए ॥

व्याख्या ॥ भिक्षुश्चशब्दः आचार्यपदयोग्यानेकगुणसमुच्चयार्थः। इच्छेत् गणं धारयितुं । भगवांश्च ( से ) तस्य भिक्षोरपि परिच्छदः परिच्छदरहितः । परिच्छदश्च द्विधा द्रव्यतो भावतश्च । तत्र द्रव्यतः परिच्छदः शिष्यादिपरिवारः भावतः सूत्रादिकं । तत्र भगवानाचार्योऽपरिच्छदो द्रव्यतो भावतः पुनर्नियमात्सपरिच्छदोऽन्यथाचार्यत्वायोग्यात् । चशब्दाद्भिक्षु श्च द्रव्यतो परिच्छदो भावतः सपरिच्छदः परिगृह्यते एवं से इत्यादि एवममुनाप्रकारेण(से) तस्य न कल्पते गणं धारयितुमेवं शब्दोविशेषद्योतनार्थः ।सचामुं विशेषं द्योतयति ।आचार्ये द्रव्यतोऽपरिच्छदे भिक्षोः सपरिच्छदस्य । न कल्पते गणं धारयितु मिति । भगवांश्च ( से ) तस्य द्रव्यतोपि परिच्छन्नः परिच्छदोपेतश्चशब्दात्सो पिच द्रव्यतोपि परिच्छन्नस्तत एवं ( से ) तस्य कल्पते गणं धारयितुमिति विशेषद्योतनार्थः। भाष्यकारोव्याख्यानयति ॥

थेरे अपलिच्छन्ने, सयंपि वगहणा तत्थ ।
छन्नो थेरो पुण वा, इअरो सीसो भवे दोहिं ॥

स्थविरोनाम आचार्यः असावेव पूजावचनेन भगवच्छब्दे नोच्यते । भगवानिति महात्मनः संज्ञा । सस्थविरोऽपरिछन्नः परिच्छदरहितः चग्रहणाच्चशब्दोपादानात् भिक्षुरपि स्वयमपरिच्छन्नः तत्र स्थविरोऽपरिछन्नो द्रव्यतः परिवाररहितो द्रव्यः। भावतः पुनर्नियमात् ।सपरिच्छदः इतरः शिष्यः पुनर्द्वाभ्याम पि द्रव्यभावाभ्यामपरिच्छन्नो भवति । तत्र भावतोऽपरिच्छन्नो नियमाद ... एव। इतरस्तु द्रव्यतोऽपरिच्छदो भावतः सपरिच्छदो योग्यः । अथाचार्ये द्रव्यतोऽपरिच्छदे किं सर्वथा भिक्षोर्गणं धारयितुं न कल्पते उतास्ति कश्चित्कल्पनप्रकारः। अस्तीति ब्रूमस्तथाचाह ॥

नोकारो खलु देसं, पमिसेहयती कयाइ कप्पेज्जा ।
ओसन्नंमिउ थेरे, सोचेव परिच्छओ तस्स ॥ ? ॥

एवं सेनोकप्पइ इत्यत्र नोशब्दो देशवचनत्वात् देशं प्रति षेधयति । तेन कदाचित्कल्पेतापि कदा कल्पते इति चेदत आह । अवसन्ने आचार्ये ।इयमत्र भावना ।यद्याचार्यो भावतः सूत्राद्युपेतस्तपःसंयमोद्यतस्तस्मिन् द्रव्यतोऽपरिच्छन्ने त

कल्पतेऽयावसन्नस्तर्हि तस्मिन् द्रव्यतोऽपरिच्छदे वा कल्पते खलु शब्दो विशेषणार्थः । स चैतत् विशिनष्टि । यो भावतः सपरिच्छदस्तस्य कल्पते न शेषस्य परिच्छदे वावसन्ने । आचार्ये गणं धारयति शिष्ये य आचार्यस्य सपरिच्छदः परिवारः स एव तस्य शिष्यस्य भवति व्यवहारस्तस्या भावनात् इतरस्य न किमप्याभवति शिथिलत्वात् । इह-परिच्छदविषया चतुर्भङ्गिका । तद्यथा । द्रव्यतोऽपरिच्छन्नो भावतश्चापरिच्छन्नः १ द्रव्यतोऽपरिच्छन्नो भावतः परिच्छन्नः २ द्रव्यतः सपरिच्छदो भावतोऽपरिच्छन्नः ३ द्रव्यतः सपरिच्छदो भावतश्च सपरिच्छदः ४ तत्र चतुर्थभङ्गवर्ती शुद्धः शेषास्त्वशुद्धाः । एष सूत्रार्थः । अधुना निर्युक्तिविस्तरः ॥

भिक्खू इच्छा गणे, धारए अपव्वाविए गणो नत्थि ।
इच्छातिगस्स अट्ठा, महातलागेण ओवम्मं ॥

भिक्षोरिच्छा गणं धारयितुं स च गणः स्वयं प्रव्राजितो नास्ति तस्मात्स्वयं साधवः प्रव्राजनीयाः ॥ अथवा यद्यपि स्वयम प्रव्राजने गणो नास्ति तथा यद्यपि यदा अवसन्न आचार्यो-जातो भवति तदा योऽसावाचार्यस्य गणः स एव तस्य भवति इच्छा च गणं धारयितुं त्रिकस्य ज्ञानादिरत्नत्रयस्यार्थाय नतु पूजासत्कारनिमित्तमत्रार्थे चौपम्यमुपमा महातडागेन । किमुक्तं भवति पद्मसरसा महातडागेन गणपरिवर्द्धस्योपमा कर्तव्या । सा चाग्रे भावयिष्यते । एष निर्युक्तिगाथा संक्षेपार्थः । गणनिक्षेपप्रतिपाद्य ॥

भावगणेण हिगारो, सो उ अपव्वाविए न संभवति ।
इच्छातियगहणं पुण, नियमणहेउं तओ कुणइ ॥

भावगणेन नो आगमतो भावगणेनाधिकारः प्रयोजनं स च भावगणो यथोक्तरूपः स्वयं प्रव्राजितो नास्ति । तस्मात्स्वयं साधवः प्रव्राजनीयाः ते परिवारतया कर्तव्याः । अथवा प्रमाद्यत्याचार्ये यः परिवारः तथा स को निर्युक्तिकारो द्वारगाथायामिच्छात्रिकग्रहणं नियमहेतुं करोतीत्युक्तं । तत्र किं नियमयति सूरिराह । निर्जरानिमित्तमेवं गणं धारयति नतु पूजादिनिमित्तं । स च गणं धारयन् यतिप्रभुर्महातडागेन समानो भवति । महातडागेन समानतामेव भावयति ॥

तिमिमगरेहिं न खुब्भइ, जहंबुनाहो वियंभमाणेहिं ॥
सोय महातलागो पप्फुल्लपउमं च जं अन्नं ॥

यथांऽबुनाथस्तिमिमकरैर्विजृम्भमाणैर्न क्षुभ्यति न स्वस्थानाच्चलति । स एव चांबुनाथ इह महातडागस्तथा विचक्षणात् अथवा समुद्रात् यदन्यत् प्रफुल्लपद्मं महासरस्तत् महातडागम् ॥

उपनयमाह ॥

परवादीहिं न खुब्भइ, संगिण्हंतो गणं च न गिलाइ ।
होंतिय सयाभिगमो, सत्ताण सरोव्व पउमड्ढो ॥

तिमिमकरैरंबुनाथ इव परवादिभिराक्षिप्यमाणो न क्षुभ्यति न च गणं संगृह्णन् यथौचित्येनानुवर्तमानो ग्लायति । यथा वा सरः पद्माढ्यं सत्वानां सदाभिगमं भवत्येवं सदा सत्वानाम भिगमसाधुः प्रभुर्भवति ॥

एयगुणसंपउत्तो, वा विज्जो गणहरोउ गच्छंमि ।
पडिव्वोहादीएहि य, जइ होइ गुणेहिं संजुत्तो ॥

एतेन समुद्रतुल्यतारूपेण पद्माढ्यसरः समानत्वेन गुणेन वा सम्प्रयुक्तो गच्छे गणधरः स्थाप्यते । सचैतद्गुणसंप्रयुक्तस्तदा भवति यदि प्रतिबोधादिभिर्वक्ष्यमाणगुणैर्युक्तो भवति । प्रतिबोधादयो गुणाः प्रतिबोधकादिदृष्टांतैर्भावनीया इति । तानेव प्रतिबोधकादीन् दृष्टांतानुल्लिंगयति ॥

पडिव्वोहगदेसियसिरि, घरेय निज्जामगेय बोधव्वे ॥
तत्तोय महागोवो, एमेया पडिवत्तिओ पंच ॥

प्रतिबोधकः सुप्तोत्थापकः देशको मार्गदेशी श्रीगृहिकोऽभाण्डागारनियुक्तो निर्यामकः समुद्रे प्रवहणनेता । तथा महागोपोऽतीवगोरक्षणकुशल एवमेता अनंतरोदिताः पंच प्रतिपत्तयोऽधिकृतार्थे आभिरिति प्रतिपत्तय उपमा । तत्र प्रतिबोधकोपमां भावयति ॥

जह आलित्ते गेहे, कोइ पसुत्तं नरं तु बोहेज्जा ।
जरमरणादिपयत्ते, संसारघरंमि तह उजिए ॥

यथा आसमंततो दीप्तगृहे कोऽपि परमबंधुः प्रसुप्तं नरं प्रबोधयेत्तथा संसारगृहे जरामरणप्रदीप्ते जीवान् अविबुद्धान् भावसुप्तान् प्रबोधयति । स स्थापनीयो गणधरादेशितस्तीर्थकरैरुक्तः प्रतिबोधकदृष्टांतः । संप्रति देशकादिदृष्टांतमाह ॥

बोहेइ अपडिबुद्धे, देसिय मग्गं विजोएज्जा ॥
एयगुणविप्पहीणो, अपलिच्छन्ने य न धरेज्जा ॥ १ ॥

( बोहेइ अपडिबुद्धे ) इति पूर्वगाथाव्याख्यायां व्याख्यातानेव देशकादीनपि दृष्टांतान्योजयेत् । ताँश्चैवं यो प्रमादीनां पंथानमृजुकं क्रमेण प्रापयति स देशक इष्यते । एवं ज्ञानादीनामविराधनां कुर्वन् यो गच्छं परिवर्द्धयति स गणधरः स्थापनीयो न शेषः । श्रीगृहकदृष्टांतभावना । यथा यो रत्नानि सुनिरीक्षितानि करोति स श्रीगृहे नियुज्यते एवं यो ज्ञानादीनामात्मसंयमयोश्चाविराधनया गणं वर्द्धयति स तादृशो गणस्य नेता कर्तव्यः ॥ निर्यामकदृष्टांतभावना । यथा निर्यामकस्तथा कथंचनापि प्रवहणं वाहयति । यथा क्षिप्रमविघ्नेन समुद्रस्य पारमुपगच्छति एष एव च तत्वतो निर्यामक उच्यते । शेषो नामधारकः । एवं य आचार्यस्तथा कथंचनापि गच्छं परिवर्द्धयति तया क्षिप्रमविघ्नेनात्मानं गच्छं च संसारसमुद्रस्य पारं नयति । स तत्वतो गणधरः शेषोवै नाममात्रपरितुष्टः । महागोपदृष्टांतभावना यो गाः स्वपदेषु विषमेषु वा प्रदेशेष्वटव्यां वा पततीर्वारयित्वा च क्रमेण स्वस्थानमानयति । स महागोप उच्यते । एवमाचार्योऽपि यो गणमस्थानेषु प्रत्यंतदेशादिषु विहारिणं धारयति । पूर्वाभ्यासवृत्तानि च प्रमादस्खलिता न्यपनयति स तादृशो गणपरिवर्द्धकः करणीयो न शेषः । अथवा प्रतिबोधको नाम गृहचिंतक उच्यते । यो गृहं चिंतयन् यो यत्र योग्यस्तं तत्र व्यापारयति । तत्र व्याप्रियमाणे च प्रमादतः स्खलनं निवारयति स गृहचिंतक उच्यते । एवं यः स्थापितो यो यत्र योग्यस्तं तत्र नियुंक्ते । नियुक्तांश्च प्रमादतः स्खलतः शिक्षयति । स स्थापनीयो गणधरपदे नेतर इति । यश्चैतद्गुणविप्रहीणः प्रतिबोधादिगुणविकलो यश्च द्रव्यतो भावतश्चेत्यर्थः । छन्नः परिच्छदहीनः स गणं धारयेत् । न स गणधरपदे स्थापनीय इति भावः ॥

दोहिं वि अपलिच्छन्ने, एक्केकेणं व अपरिच्छन्नो य ।
अहारणा होंति इमे, भिक्खुंमि गणंधरं तंमि ॥

द्रव्यतोऽपरिच्छन्नो भावतश्चापरिच्छन्न इत्यादिचतुर्भंगी प्रागे

वोपदर्शिता। तत्र भिक्षौ गणं धारयति द्वाभ्यामपि द्रव्यतो भाव तश्च नेतव्यः। अपरिच्छिन्ने परिच्छदरहिते प्रथमभंग उपात्तः। एकैकेनवा अपरिच्छिन्ने द्वितीयभंगवर्तिनि द्रव्यतोऽपरिच्छिन्ने तृतीयभंगवर्तिनि वक्ष्यमाणानि उदाहरणानि भवंतितान्येवाह॥

भिक्खू कुमारविरए, ऊामणपंती सियालरायाणो ।
वित्तत्थजुण्ह असती, दमगऊयगदामगाईया ॥

भिक्षौ द्रव्यभावाभ्यामपरिच्छिन्ने गणं धारयति कुमारदृष्टांतः। विरयो लघुश्रोतोरूपो ध्मापनवनदवे द्वितीयो दृष्टांतः । तृतीयः पंक्तिदृष्टांतः। चतुर्थः शृगालराजदृष्टांतः। पंचमो वित्रस्तेन सिंहेन सह युरूस्याभावो दृष्टांतः । एते पंचदृष्टांता अप्रशस्ताः । प्रथमभंगवर्तिनि प्रशस्ताश्चतुर्थभंगे द्वितीये द्रमकदृष्टांतस्तृतीयभंगवर्तिनि भृतकस्य सतो दामकादिपरिग्रहो दृष्टांतः। अत्रादिशब्दात् मयूरांगचूलिकादिपरिग्रहः॥ तत्र कुमारदृष्टांतभावनार्थमाह॥

बुद्धीबलपरहीणो, कुमारपच्चंतमक्खरणं तु ।
अप्पेणेव वलेणं, गिराहो वणमासणा रन्ना ॥

एको राजकुमारः बुद्धिबलपरिहीनो हस्त्यादिबलपरिहीनश्चेति भावः। एतेन द्रव्यभावपरिच्छदरहितत्वमस्याख्यातं। स प्रत्यंतदेशे स्थितो डमरं देशविप्लवं करोति। ततो दायादेन राज्ञा तं बुद्धिबलपरिहीनं ज्ञात्वा अल्पेनैव बलेन दंडप्रेषणेन ग्रहापणं तस्य राज्ञा कृतं। ग्रहणानन्तरं च शासना कृता। ग्राहयित्वा स विनाशित इति भावः॥

अत्रैवोपनयमाह।

सुत्तत्थअणुववेतो, अगीयपरिवारगमणपच्चन्तं ।
परतित्थकडं ठावण, सेवगसेहादवच्छाउ ॥

एवं सूत्रेण अर्थेन चानुपेतोऽसंपन्नोऽनेन भावतोऽपरिच्छन्नतामिवाह । अगीतपरिवारोऽगीतार्थपरिवृतोऽनेन द्रव्यतोऽपरिच्छन्नत्वमुक्तं। स प्रत्यंतं देशं प्रति गमनं विधाय आचार्यत्वं करोति। स च तया आचार्यत्वं विडंबयन् परतीर्थिकैः परिमीय निःपृष्टव्याकरणः क्रियते । तदनंतरं श्रावकाणामपभ्राजना। यथा विडंबिता यूयं न भवदीयोधर्म्मः शोभनः। तथा च भवदाचार्यःपृष्टः सन् किमप्युत्तरं ददाति। किंत्वसमंजसं प्रलपतीति। तथा शिष्या अपि तीर्थपरिणस्यंते। एवं च जायते महानन्नर्थः शासनस्य। तदेवं यत इमे दोषास्तस्माद्द्रव्यपरिच्छदरहितेन भिक्षुणा न गणो धारयितव्यः। गतं कुमारद्वारम्॥

अधुना वियरयदृष्टांतमाह॥

वणदवसत्तसमागम, विरए सिंहस्स पुंछमेवणया ।
तं दिस्सं जंबुएणो, विविरयवूढा मिगाईया ॥

वियरयो नाम लघु श्रोतोरूपो जलाशयः। स च चोडशहस्तविस्तारो नद्यां महागर्त्तायां वा तस्याऽकुचः त्रिहस्तविस्तारस्तस्य प्रवेशो मध्यो वेंट॥

अन्नया अडवीए वणदवो जातो सो सव्वतो समंता दहंतो वच्चइ ताहे मिगादयो सत्ता तस्स वणदवस्स भीया परिधावं वेढं पविट्ठा । तत्थवि सो वणदव्वो डहंतो आगच्छइ। तत्थ य सीहो पविट्ठो। आसितोयमिगादी नाया चिंतिंति। वेंटए स वणदवो पविसइत्ति दच्छियव्वंति। ततो सीहं पायवडिया विण्णवेंति । तुम्हे अम्हं मिगरायाओ नित्थारोहि । सीहेणं भण्णइ। पुंछे मम धणियं लग्गा। ततो सीहेण प्लुतं कयं। सोलसहत्थे विकंतो सह मिगाई हिंडणीणं अन्नया पुणो वणदवो जातो। तहेव मिगादयो तत्थ पविट्ठा। ततो एक्को सियालो सीहेण उत्तारियपुव्वो चिंतेइ । अहं पि सीहो चेव उत्तारेहामित्ति मिगादयो भणंति । मम पुच्छे धणियं लगेहते लग्गा तेण सियालेण प्लुतं कयं । वियरए सह मिगाइएहिं पडिओ सव्वे विणट्ठा॥ तेअद्धाणातीआवतीसु गीयत्थेणं वीयपए जयणानिसेवणा मिए गच्छं नित्थारियं पासित्ता अगीयत्थो चिंतेइ। सव्वेवि एवमायत्ति एवं मन्नंतो निक्कारणे वितियपदेण गच्छेण समं विहरइ सो तहा विहरंतो नगरगाइभववियरए अप्पाणं गच्छं च पाडेइ॥

एष भावार्थः। अधुनाऽक्षरार्थोविध्रियते। वनदवे जाते सत्वानां मृगादीनां वियरयपरिवृत्ते वेंटे समागतः। तेषां सिंहस्य पुच्छे लग्नानां सिंहेन सह व्यपरजसा लघुश्रोतोरूपस्य जलाशयस्य डेपनं वंधनं ततोदृष्ट्वा जंबुकेनाऽप्यन्यदा तत्कर्तुमारब्धं। तेन च तथाकर्तुमशक्नुवता मृगादयः तस्मिन् व्यपरजसि वूढाः क्षिप्ता एष दृष्टांतः॥

संप्रति दार्ष्टांतिकयोजनामाह॥

अद्धाणादिसु एवं, दट्ठुं सव्वत्थ एव मन्नन्तो ।
भवविरियं अगीतो, पाडइअन्नेवि पवडन्तो ॥

अध्वादिष्वापत्स्वेव द्वितीयपदेन यतनानिषेवणतो गच्छं निस्तारयंतं दृष्ट्वा अगीतोऽगीतार्थःसर्वत्रैव मारयितव्यमिति मन्यमानोनिष्कारणयतनया द्वितीयपदेन गच्छं परिपालयन् भववियरयमिति द्वितीया प्राकृतत्वात् सप्तम्यर्थे। नरकादिभवरूपे व्यपरजसि प्रपतन् अन्यानपि स्वगच्छवासिनः पातयति। गतं व्यपरजोद्वारम्॥

अधुना पंक्तिद्वारमाह॥

जम्बुककूवे चन्दे, सीहेणुत्तारणा य पंतिए ।
जंबुक सपन्तिपडणं, एमेव अगीयाणं ॥

एगया जेट्ठामासे सियाला तिसिया अद्धरत्ते कूवतडे ठिया। कूवं पलोयंति। तत्थ ते जोण्हाए उदए चंदविंबं पासंति। चिंतेतिय चंदो कूवे पडितो। तत्थ य सीहो आगतोचेट्ठइततो तेहिं सियालेहिं सीहो विण्णवितो तुमं मिगाहिवतीए सवि गहाहिवती कूवे पडितो एयस्स गुणेणं अम्हे दिवसजूयाए रत्तीए सुहं निरुवसग्गा विय रामो ततो जुज्जसि तुमं गहाहिवतिमुत्तारिउ । सीहो भणति। पंतिए समं पुच्छे लग्गित्ता वियरह अंतिल्लस्स चंदो लग्गिहिति ताहे सव्वे प्लुतेनोत्तारेहामिति ततोते पंतीए सीहपुच्छे लग्गा कूवमज्झे उत्तिएणा सीहेण प्लुतं काउं सव्वे उत्तारिया। उवरि गगणे चंदं पासेंति।

तले य आलोलिए उदएचंदं अपासमाणा उत्तरियत्ति म न्नंति। अन्नया तहेव चंदं पासेत्ता सीहेण उत्तारियपुव्वो सियालो एवं चिन्तेइ। अहमवि सीहोइव उत्तारेमि ॥ एवं चिंतित्ता सोसियालो भणइ। पतीए मम पुच्छे ल-ग्गित्ता उयरहते उत्तिन्ना। सीयालेणं उत्तारेहामित्ति प्लु-तं कयं। ततो असमत्थोत्ति तह पुच्छे लग्गित्ता सह कूवे पडिता। तत्थेव मतो एवमहाणादीसु आवईसु गीयत्थेणं वितियपदे जयणा निसेवणाए ॥

इत्यादि। उपनयः पूर्ववेदव भावार्थोऽधुना अक्षरार्थः। एकदा जंबुकाः कूपतटे मिलितास्तैः कूपे कूपमध्ये चंद्रो दृष्टः। तस्मिन् दृष्टे तदुद्धरणाय सिंहपुच्छविलग्नानां पंक्त्या प्रविष्टानां शृगालानां सिंहेनोत्तारणा कृता। तत् दृष्ट्वा अन्यदा एकेन जंबुकेन सिंहोत्तारितपूर्वेण तथा कर्तुमारब्धं। ततस्तस्य जंबुकस्य सपंक्तिकस्य कूपे पतनमेवमनेनैव दृष्टांतद्वयोक्तेन प्रकारेण गीतागीतयोर्भवकूपे गच्छेन सह पतनं तत उत्तारणं च गच्छस्य परिभावनीयमिति। गतं पंक्तिद्वारमिदानीं शृगालराजद्वारमाह ॥

नीलारागे खसद्दुम, हत्थीसरजा सियालकच्छजओ॥
बहुपरिवारअगीते, विच्छूयणो हावणपरेहिं ॥

एको सियालो रत्तिघरं पविट्ठो घरमाणुसेण वेतितो निच्छु भिउमाढत्तो सो पुण गाईहि पारद्धो नीलीरागरंजणे पडितो किहवि ततो उत्तिन्नो नीलवन्नो जातो तं अन्ने सरजतरक्खु सियालादी पासिउं भणंति। को तुमं एरिसो सो भणइ अहं सव्वाहिं मृगजातीहिं खसद्दुमो नाम मिगराया क ओ। ततो अहं एत्थमागतो पासामि। ताव कोमन्नाति ते जाणंति। अपुव्वो एतस्स एसदेवेहिं अणुग्गहितो ततो भ णंति अम्हे तव किंकरा।

संदिसह किं करेमा खसद्दुमो भणइ हत्थिवाहणं देह दिन्नो विलग्गो वियरति। अन्नया सियालेण उव्वुइयं। ताहे खसद्दुमेणं तं सियालसहावमसहमाणेण उव्वुइयं ततो हत्थिणा सियालोत्ति, नाउं सोंडाए घेत्तुं मारितो॥ एवं कोइ अगीयत्थो अगीयत्थपरिवारं लभेत्ता पच्चंत देसं तं गंतुं आयरिउत्ति पकासेइ। सो काहिंवि विओसेहिं पे यालितो जानड्किंविजाणइ एवं तेण अप्पा जहामितो ॥

एष भावार्थोऽधुना अक्षरार्थः। नील्यासंबंधी रागो यस्य स नीलीरागः। शृगालःखसद्दुमोनाममृगराजो जातः। तस्यहस्तिनः सरजाः शृगाला उपलक्षणमेतत्। तरक्षादयश्च परिवारः। सोऽन्यदा कस्यापि शृगालस्योन्नदमाकर्ण्य शृगालोन्नादितमकरोत्। ततःशृगालोऽयमिति ज्ञात्वा हस्तिना मारित इति शेषः। एवं गीतार्थबहुपरिवारे अगीते अगीतार्थे विहरति बहुश्रुतोऽहमाचार्य इति बहुजनविश्रुतं विकुर्वाणः प्रष्टव्याकरणासमर्थतया परेभ्यः पक्षघर्तिन्यश्चापभ्राजना भवति। अथवा अयमन्य उपनयः ॥

सेहादिकज्जेसुं वा, कुलादिसमितिसु जंपउ अयं तु।
गीएहीं विसुयंतो, निहोडणमपचओ सेहिं।

वाशब्द उपनयांतरसूचकः। शैक्षकादिकार्येषु कुलादिसमवाये नियुक्तः कुलगणसंघसमवायेषु श्रावकाः सिद्धपुत्राश्च ब्रुवत अयमेव तुरवकारार्थः। बहुश्रुतो जल्पतु व्यवहारनिर्णयं करोतु यथाकस्य भवतीति। ततस्तेनाव्यवहारमुक्तं तच्च गीतार्थैर्विश्रुतं ततस्तै निहोडण मिति निहेडितं यथा अगीतार्थ एष न जानाति व्यवहारमिति। ततः शैक्षे प्राकृतत्वात् पष्ठ्यर्थेस प्तमी। एकवचने बहुवचनं। शैक्षकाणामुपलक्षणमेतत् श्रावकाणां सिद्धपुत्राणां च तदुच्चस्यप्रत्ययो जातः चिंतयति च एष इय त्कालमस्माभिर्गीतार्थः संभावित इति। गतं शृगालराजद्वारम् ॥

संप्रति (वित्तत्थजुद्धअसतीत्ति) द्वारं व्याचिख्यासुराह ॥

एक्केकएगजाती, पतिदिण सममेव गिएहाइ ॥
सीहेण हु जुज्झइत्ति, पाडइ कूवम्मि वुड्डससगेण ॥ १ ॥
एमेव जंबुगो, वा कूवे पडिबिंबमप्पणो दिस्स।
उवणाय तत्थ मरणं सामायारीगयिअगीयाणं ॥ २ ॥

एगो सीहो सो हरिणजातीणं लुद्धो दिवसे २ हरिणं मारेऊण खाइ। तओ हारिणेहिं विसुविओ किमंगरायं तुमं हरिणजातीणं एक्याए परिनिव्विट्ठो ता पसायं करेहि। सव्वामिगजातीणं वारएणं पइदिवसमेक्केक्कं मिगं खाहि। सीहेणं चिंतियं जुत्तमेस भणइ ततो सव्वे मिगा मेलित्ता सीहेण भणिया। तुब्भे कुलजुत्तत्ताए आत्मीयकुलौचित्येनेत्यर्थः। सव्वमिगजातीणं वारएणं पइदिवसं सट्ठाणट्ठियस्स एगं पेसिज्जाह। तेहिं अब्भुवगयं।

ततो ते वि मिगा तहेव पेसंति। अन्नया ससगजातीए वारए। ससगा संपसारेंति मन्त्रयंतीत्यर्थः। कोवच्चउ-अज्ज सीहसगासे एगो बुड्ढससगो भणइ। अहं वचामि। जो सव्वेसिं मिगाणं संति काउं एमित्ति सो वालिओ अंतराले मरुयकूवसरिसे कूवं दट्ठु उस्सूरे सीहसगासमागतो। ताहे सीहेण भणियं किं रे तुमं उस्सूरे आगतोसि। ससगो भणइ। अहं पाए आगच्छंतो संतो अन्नेण सीहेण रुद्धो। जहा काहिं वच्चसि। ततो मए सब्भावो कहिंतो। ताहे सोभणइ अन्नो न होइसो मिगराया ततो मए भणियं। जइ अहं तस्स मिगरायस्स सगासं न जामि तो सो रुट्ठो सव्वे ससगा उच्छादेहित्ति। तम्हा जामि तस्स सगासं कहेमि। ततो जो तुमं वलितोहोहित्ति तस्स अम्हे आणं कहामो। ताहे अहं तेण भणितो वच्चा कहेहि भण आगच्छ मम सगासं जदि ते सत्ती अत्थि ततो सीहे भणति दंसेहि ममं तं सीहं। ततो ससओ सीहेण समागम्म दूरं अगडं दूरत्थोवत्तदंसेति। भणइ य एत्थ पविट्ठो चिट्ठइ। जइ तपत्तियसि तो तुमं अगज्जयज्जेण

कोरंटगं जहा भावि, यद्धम्मं पुच्छिऊण वा अन्नं ॥
असति अरहं सिद्धे, जाणंतो सुद्धो जावेव ॥ १ ॥

कोरंटकं नाम भरुकच्छे उद्यानं तत्र भगवान्मुनिसुव्रतस्वामीअर्हन्ननीर्णं समवसृतसूत्र तीर्थकरेण गणधरैश्च बहूनि प्रायश्चित्तानि च दीयमानानि तत्रत्यया देवतया दृष्टानि ततः कोरंटकं गत्वा तत्र सम्यक्त्वभावितदेवताराधनार्थमष्टमं कृत्वा तत्र च सम्यक्त्वकंपितायादेवतायाः पुरतो यथोचितप्रतिपत्तिपुरस्सरमालोचयति । सा च प्रयच्छति यथार्हं प्रायश्चित्तं । अथ सा देवता कदाचित् च्युता भवेत् पश्चादन्या समुत्पन्ना तया च न दृष्टस्तीर्थकरस्ततः साष्टमेनाकंपिता ब्रूते महाविदेहे तीर्थकरमापृच्छ्य समागच्छामि ततः सा तेनाऽनुज्ञाता महाविदेहे गत्वा तीर्थकरं पृच्छति पृष्ट्वा च समागच्छत्यसाधवे प्रायश्चित्तं कथयति । यथा च कोरंटकमुद्यानमुक्तमेवं गुणशिलादिकमपि द्रष्टव्यम् अत्राऽप्यजीर्णं वर्द्धमानस्वाम्यादीनां समवसरणात् । तासामपिदेवतानामभावे अर्हत्प्रतिमानां पुरत स्वप्रायश्चित्तदानपरिज्ञानकुशल आलोचयति । ततः स्वयमेव प्रतिपद्यते प्रायश्चित्तं तामप्यसत्यभावे प्राचीनादिदिगभिमुखोऽर्हतः सिद्धानभिसमीक्ष्य जानन् प्रायश्चित्तदानविधिः । विद्वान् आलोचयति । आलोच्य च स्वयमेव प्रतिपद्यते प्रायश्चित्तं सचतथा प्रतिपद्यमानः शुद्ध एव सूत्रोक्तविधिना प्रवृत्तेः । यदपि विराधितं तत्रापि शुद्धप्रायश्चित्तप्रतिपत्तेरिति । कोरंटकं जहेत्यत्र यथाशब्दोपादानात्कोरंटकसमुद्दिशताऽन्यान्यऽप्युद्यानानि सूचितानीति प्रकटयिपुराह ।

सोहीकरणा दिट्ठा, गुणसिलमादीसु जह य साहूणं ।
नोदेंति विसोहीतो, पच्छुप्पएणा व पुच्छंति ॥

गुणशीलादिपूद्यानेषु याभिर्देवताभिः साधूनां तीर्थकरैर्गणधरैश्चानेकशो विधीयमानानि शोधिकरणानि दृष्टानि ताः स्वयं ददति प्रयच्छंति । विशोधीः प्रायश्चित्तानि याः पुनः प्रत्युत्पन्नाः देवतास्ता महाविदेहेषु गत्वा तीर्थकरान् पृच्छंति । पृष्ट्वा च साधुभ्यः कथयति ॥ आ. म. १ अ० ग.आधि. १ प्रतिमा. श्लो. ६४ ॥

( १४ ) गीतार्थमवाप्य शल्यानुद्धरणादौ दोषगुणादिकं भावयता यद्विधेयत्वम् ॥

अथ गीतार्थमवाप्य शल्यानुद्धरणादौ दोषगुणादिकं भावयता यद्विधेयं तदाह । पंचा० । वृ. १५ ॥

मरिउं ससल्लमरणं, संसाराडविमहाकडिल्लंमि ।
सुचिरं भमंति जीवा, अणोरपारंमि ओइन्ना ॥ ४२ ॥

व्या. । मृत्वा आसेव्य सशल्यमरणं प्रतीतं ततः किमित्याह । संसाराटविमहाकडिल्ले भवारण्यगुरुगहने सुचिरमति दीर्घकालं भ्रमंति पर्यटंति जीवा देहिनः अनर्वाक्पारे अर्वाक्भागपरभागवर्जिते अवतीर्णा अवगाढा इति संवेगं कृत्वेतियोगः तथा ॥

उद्धरियसव्वसल्ला, तित्थगराणाए सुट्ठिया जीवा ।
भवसयकयाइं खविओ, पावाइं गया सिवं थामं । ४३ ।

व्या० । उद्धृतसर्वशल्याः कृतालोचनास्तीर्थकराज्ञायां जिनोपदेशे सुस्थिताः सुष्ठु व्यवस्थिताः संतो जीवा देहिनः भवशतकृतानि जन्मशतविहितानि क्षपयित्वा प्रकम्प्य शल्योद्धारसामर्थ्यात् यानि यानि कर्माणि गताः प्राप्ताः शिवं निरुपद्रवं थामंति स्थानं सिद्धालयमित्यर्थः ।

सल्लुद्धरणं चइमंति, लोगबंधूहिं दंसियं सम्मं ।
अवितहमारोग्गफलं, धरणोहं जेणिमं णायं । ४४ ।

व्या० । शल्योद्धरणमालोचना चशब्दः पूर्वगाथाद्वयोक्तार्थापेक्षया समुच्चयार्थः । इदमनंतरोक्तविधानं त्रिलोकबंधुभिर्जिनैरित्यर्थः दर्शितमुक्तं सम्यक् सोपपत्तिकं अवितथमव्यभिचारि आरोग्यफलं भावारोग्यसाधकं ततश्च धन्योऽहं पुण्यवानहं येन मया इदमेतच्छल्योद्धरणं ज्ञातमवगतम् ॥

ताउद्धरामि सम्मए, य एयस्स णाणरासिस्स ।
आवेदियं असेसं, अणियाणो दारुणविवागं । ४५ ।

व्या०ताइति यस्मादिदं मया ज्ञातं तत्तस्मादुद्धराम्यपनयामिसम्यग् न्यायेन एतत् भावशल्यं एतस्य गुरोर्ज्ञानराशेः अग्रे सद्बोधनिकरस्याऽवेद्य कथयित्वाऽशेष रूकलं अनिदानो निर्निदानः सन् दारुणविपाकं रौद्रफलं शल्यमिति प्रक्रमः ।

इयसंवेगं काउं मरुगाहरणादिएहिं विधेहिं ।
दढ पुण करणजुत्तो, सामायारिं पउंजेज्जा ॥

व्या० । इति एवमनंतरगाथाचतुष्कोक्तप्रकारसंवेगं शुभाध्यवसायविशेषं कृत्वा विधाय करेत्याह मरकाहरणादिभिर्ब्राह्मणोदाहरणाद्यैः समयप्रसिद्धैश्चिन्हैर्हिंगर्मरणाद्युपगमेनापि शुद्धैः कार्यत्येवं भूतार्थगमकैः सशल्यतादोषज्ञापकैर्वा आदिशब्दात्पीठमहापीठादिग्रहः दृढमत्यर्थमपुनः करणयुक्तः पुनरमुमपराधं न करिष्यामीत्यभिप्रायवान् सन् सामाचारीमालोचनागतसमाचारं वंदनकदाननिरद्यादानादिकं प्रयुंजीत विदध्यादालोचनाकारीति ॥

( १५ ) मरणाऽभिमुखेनाऽप्यालोचना करणीयाऽत्र ब्राह्मणदृष्टान्तः ॥

मरुकज्ञातं चैतत् ॥

नगरे पाटलीपुत्रे, विप्र आसीत् त्रिलोचनः ।
वेदवेदांगतत्त्वार्थे, विशारदशिरोमणिः ॥ १ ॥
तस्य पार्श्वे बटुः कोऽपि, समायातः प्रणम्य तम् ॥
उवाच मयका मोहा, त्परदाररतिः कृता ॥ २ ॥
तस्यपापस्य मे शुद्धिः क्रियतां सोऽप्यभाषत ।
तद्भावस्य परीक्षार्थं, यथा भो विप्रपुत्रक ! ॥ ३ ॥
तप्तां लोहमयीं नारीं, फुल्लकिंशुकसन्निभाम् ।
आलिंगय यतो नान्य,त्प्रायश्चित्तमिहास्ति ॥ ४ ॥
तेनापि पापभीतेन, प्रतिपन्नमिदं ततः ।
सोपि विज्ञाय तद्भावं, शुद्धिमन्यां न्यवेदयत् ॥ ५ ॥
अथवा मरुकोदाहरणमेवं ॥
बभूव ब्राह्मणः कोऽपि वेदांगेषु विशारदः ।
स्वागमाहितबोधेन, धर्मार्थोभूत्स तापसः ॥ १ ॥
ततस्तपस्यतस्तस्य, वसतस्तापसाश्रमे ।
कंदमूलाशिनोऽत्यर्थं, कष्टानुष्ठानकारिणः ॥ २ ॥
स्नानाद्यर्थं नदीतीरे, प्रयातस्यैकदा किल ।
पश्यतो मत्स्यबंधानां, मत्स्यमांसस्य भक्षणम् ॥ ३ ॥
तत्र जाताभिलाषस्य, जेमितस्य प्रयाच्य तत् ।
तस्यैवाऽजीर्णदोषेण, समुत्पन्नो महाज्वरः ॥ ४ ॥

तद्वि.केत्सार्यमानोतो, वैद्यः सोऽपि च पृष्टवान् ।
किंनो स्त्वं कृतवान् ब्रूहि, सोऽप्यन्नापत लज्जया ॥५॥
कंदमूलफलाहारा, स्तापसा यत्र भुंजते ।
तद्भक्तं न पुनस्तेन, कथितं मत्स्यभक्षणम् ॥ ६ ॥
वैद्योऽपि तस्य वाक्येन, ज्ञात्वा तं वातकज्वरं ।
तथा चिकित्सां चक्रे, नचाभूत्स्वस्थताऽस्य ॥ ७ ॥
पुनः पृष्टोऽथवैद्येन, तदैवाख्यातवानसौ ।
चक्रे क्रियां मतामेव, विशेषान्नत्वभूद्गुणः ॥ ८ ॥
अन्यदा वेदनाक्रांतो नीतोऽसौ मृत्युराहसात् ।
लज्जां विहाय वैद्याय, न्यगादीन्मत्स्यभोजनं ॥ ९ ॥
ततोवैद्योऽन्यगादीत्तं, दुष्टु दुष्टु त्वया कृतं ।
यदेयंत दिनानीदं नाख्यातं रोगकारणं ॥ १० ॥
अधुनापि कृतं साधु साधो यत्साधितं त्वया ॥
निदानं ज्वररोगस्य, करोमीतो रुजः क्षयम् ॥ ११ ॥
तस्योचितं ततो वैद्यः, क्रियां कृत्वा तकं व्यधात् ॥
व्याधिव्याधाव्यपेतांगं, पुष्टदेहं महोजसमिति ॥ १२ ॥

( १६ ) अदत्तालोचने व्याधदृष्टान्तभावना.

कंटगमादिपविट्टे, नोद्धरइ सयं नहोइ एकहए ।
कमढीभूयवणगए, आगलणं खोडियामरणं ॥

इह किल व्याधा वने संचरंत उपानहौ पादेषु नोपनह्यंतिमा हस्तिन उपानहोः शब्दान श्रोष्यतीति । तत्रैकस्य व्याधस्याऽन्यदा वने उपानहौ विना परिभ्रमतो द्वयोरपि पादयोः कंटकादयः प्रविष्टा आदिशब्दात् श्लक्ष्णं किलिंचादिपरिग्रहः ॥ तान्प्रविष्टान् कंटकादीन्स्वयं नोद्धरति । नापि भोजिकायै निजभार्यायै व्याधिं कथयति । ततः स तैः पादतलप्रविष्टैः कंटकादिभिः पीडितः सन् वनगतो हस्तिना पृष्टतो धावता प्रेर्यमाणो धावन् कमठीभूतः स्थले कमठ इव मंदगतिरभूत् ततः प्राप्तो हस्ती प्रत्यासन्न देशमिति जानन् क्षुधाक्रांतोगत्वा ( आगलण ) मितिवैकल्यं प्राप्तः । ततो मरणमेव गाथाक्षरार्थः । भावार्थस्त्वयं ।

एगो वाहो उवाहणातो विणावणे गतो तस्स पायतला कंटगाईणं भरिया ते कंटगाइयानो सयमुद्धरियानो विय बाहीए उद्धरावियां अन्नया वणे संचरंतो हत्थिणा दिट्ठो तो तस्स धावंतस्स कंटगाइया दूरतरंमंसे पविट्ठा । ताहे अतिदुक्खेण अद्दितो महापायवो इवाच्छिन्नमूलो हत्थिभएणं पवेयणभूतो पडितो हत्थिणा विणासितो ॥ बितिए सयमुद्धरती अणुद्दिए भोइयाए नीहरइ । परिमद्दणदंतमलादि पूरणं वणगयपलातो ॥

अन्यो द्वितीयो व्याध उपानहौ विना वने गतः । तस्य वने संचरतः कंटकादयः पादतले प्रविष्टा स्तान्स्वयमुद्धरति ये च स्वयमुद्धर्तुं न शक्तान् अनुद्धृतान् भोजिकया निजभार्यया व्याधा नीहारयंति निष्काशयंति तदनंतरं तेषांकंटकादिवेधस्थानानामंगुष्ठादिना परिमर्दनं तदनंतरं दंतमलादिना आदिशब्दात् । कर्णमलादिपरिग्रहः । पूरणं कंटकादिवेधानां ततोऽन्यदा वनगतः सन् हस्तिना दृष्टोऽपि पलायितो जातो जीवि-

तव्यसुखानामाभागी एष दृष्टांतः । सांप्रत दार्ष्टांतिकयोजनामाह ॥

वाहत्थाणी साहू, वाहिगुरुकंटकादिअवराहा ।
सोही य ओसहाइ, पसत्थनाएण वणतो उ ॥

व्याधस्थानीयाः साधवः व्याधिस्थानीयो गुरुः कंटकादिस्थानीया अपराधा औषधानि दंतमलादीनि तत्स्थानीया शोधिः अत्र द्वौ व्याधदृष्टांतौ प्रशस्तोऽप्रशस्तश्च आद्योऽप्रशस्तो द्वितीयः प्रशस्तः । तत्र प्रशस्तेन ज्ञातेन दृष्टांतेनोपनयः कर्त्तव्यः । आचार्योऽपि यदि तान् उपेक्षते ततः कंटकादीनामुपेक्षको व्याध इव सोऽपि दुस्तरमापदमाप्नोति । तथा चाह ॥

पडिसेवंते उवेक्खइ नयणं ओवीलए अकरयंतो ।
संसारहत्थिहत्थं पावति विवरीयामयरोवि ॥

इतरोऽपि आचार्योऽपि तुशब्दोऽपिशब्दार्थः । यः प्रतिसेवमानात् उपेक्षते ननु निषेधति न वा कुर्वतोऽकुर्वाणात् प्रायश्चित्तमुत्पीडयति । न भूयः प्रायश्चित्तदानदंडेन ताडयन् कारयति सविपरीतमाचार्यपदस्य हि यथोक्तनीत्या परिपालनफलमचिरात् मोक्षगमनं तद्विपरीतं संसार एव हस्तिहस्तं प्राप्नोति । दुस्तरं संसारमागच्छतीति भावः । उपसंहारमाह ॥

आलोयमणालोयणदोसा य, गुणा य वण्णिया एए ॥

एते अनन्तरोदिता आलोचनायां गुणा अनालोचनायां दोषा वर्णिताः उ० १ आगमव्यवहारिणां सकाशे आलोचना (आगमववहारि ) शब्दे ॥

इदानीमागमव्यवहारिणामभावे समयानुसारेणो त्कृष्टश्रुतानां श्रुतव्यवहारिणां समीपे आलोच्यत इति । जीत. ।

( १७ ) स्वगणपरगणवासिकानां समीपे आलोचना.

स्वगणपरगणवासिकानां समीपे आलोचना उङ्गचूलिकायाम्. ॥

कइणं भंते सहुरूवे आयरिय उवज्झाए पमायवंते । सगण परगण वासियाणं समीवे पावं आलोइज्जा तएणं अज्जसुहम्मे जंबू एवं वयासी । जंबू जिणसासणे ववहारो वल्लवंतो त्थि भिक्खू अणागदकम्मं अप्पतरं अकिच्चट्ठाणं पडिसेवित्ता आलोएज्जा तत्थ पासेज्ज पुणो आयरियउवज्झायं बहुसुयं बहूआगमं कप्पइ से तस्संतिए आलोइत्तए पडिक्कमित्तए निंदए गरिहारत्तिए विओदित्तए अकरणयाए अब्भुट्ठित्तए अहारिहं पायच्छित्तं पडिवज्जित्तए जत्थेवणो आयरियउवज्झायं पासेज्ज बहुसुयं बहुआगमं तत्थेव संभोइय उवज्झाय आयरियपासेज्ज बहुसुयं बहुआगमं कप्पइ से तस्संतिए जाव पडि वज्जित्ता । १ । जत्थेणो संभोय आयरियउवज्झायं पासेज्ज तत्थेव अण संभोइय आयरिय उवज्झायं पासेज्ज तत्थेव बहुसुत आगमं तस्संतियं जाव पडिवज्जित्तए । ६ । जत्थेव णो अप्पसंभोइय आयरिय उवज्झायं पासेज्ज तत्थेव सावयं पासेज्ज बहुसुअं तस्संतिए आलोयत्तए ॥ ४ ॥ जत्थेव णो सावयं जत्थेव सारविहं जत्थेव णयेतत्थेव पच्छा कडंजाव आलो० । ५ ।

जत्थेव णो पच्छा० । तत्थे समन्नावियाइं चेइयाइ पासिज्ज जाव कप्पइ जत्थेवणो समन्नावियाइं पासिज्ज तत्थेव गमेणगरस्स वाहिं पाइणाभिमुहस्स वा उदीणाभिमुहस्स वा ठिच्चा अलोइज्जा जाव पडिवज्जिज्जा एवं जंवू जहाविवएहारुद्देसएपच्छत्तं तहा कारिज्जा णोय रपासंमि एसु रांजिज्जा ।

निर्ग्रन्थानां निर्ग्रन्थीनां च स्वपक्षपरपक्षयोरालोचना व्यवहारकल्पे तथा च व्यवहारसूत्रम् उ. ५ ।

जे निग्गंथानिग्गंथीउयसंभोइया सियाणे एहं कप्पइ अन्नमन्नं कप्पई अणमणहस्स अंतिए आलोइत्तए अ थिय इत्य केइ आलोयणा रिहे कप्पति से तस्संतिए- आलोए तएणज्जिया इत्यं के इ अणे आलोयणारिहे एवएहं कप्पइ अन्नमन्नसंतिए आलोएत्तए ॥ १८ ॥

व्य० ५ उ० अस्य सूत्रस्य संबंधप्रतिपादनार्थमाह ॥

थेरो अरिहो आलोयणाए आयारकप्पितोजोग्गो ।
साय न होइ विवक्खे नेव सपक्खे अगीएसु

स्थविरः पूर्वं सूत्रे ऽभिहितः स च आलोचनाया अर्हः सोऽपि च योग्य आलोचनाया भवत्याचार कल्पिक आचारप्रकल्पा भिधानाध्ययन धारी । तत एवंसति सा आलोचना न विप क्षे नाऽपि सपक्षे अगीतेष्वगीतार्थेषु भवति । तत्र संयता संयतीनां विपक्षः संयत्यः संयतानां । सपक्षः संयता संयतीनां संयत्यः सयतीनां तत्र विपक्षे सपक्षे वा गीतार्थेष्वालोचनाप्रतिषेधार्थमधिकृतं सूत्रं व्याख्याय निर्ग्रन्थानिर्ग्रन्थ्यो वा संभोगिका स्युस्तेषां (नोएहमिति) वाक्यालंकारे कल्प ते अन्योन्यस्य परस्परस्यांतिके आलोचयितुमगीतार्थत्वात् अस्तिचेदत्र कश्चिदालोचनार्हं एवं सति न कल्पतेऽन्यान्यस्यांतिके आलोचयितुमेव सूत्रसंक्षेपार्थः ॥ सम्भोगविभागं सप्रपंचप्रतिपाद्य ॥

सांप्रतमालोचनाविधिमाह ॥

आलोयणा सपक्खे, परपक्खे चउगुरुं च ।
आणादी भिन्नकहादि, विराहणं दट्टूण व भावसंबंधो ॥

आलोचना सपक्षे दातव्या । तद्यथा ।

निर्ग्रंथो निर्ग्रंथस्य पुरत आलोचयति । निर्ग्रंथी निर्ग्रन्थ्याः पुरतो यदि पुनर्विपक्षआलोचयति । यथा निर्ग्रंथो निर्ग्रन्थ्याः पुरतो निर्ग्रन्थी वा निर्ग्रन्थस्य तदा प्रायश्चित्तं चतुर्गुरुकं किंत्वाज्ञादयश्च दोषा श्चशब्दो भिन्नक्रम : सचतथैवयोजितः कस्मादेवमत आह भिन्नकहादि इत्यादि च चतुर्थव्रतातिचारमालोचयंत्याः संयत्या भिन्न कथादोषो भवति चतुर्थव्रता तिचारकथनतस्तस्याः कदाचि दालोचनाधारस्य भावभेदो भवतीत्यर्थः । आदिशब्दात् पष्ठी जूता सा यांचामिति कुर्यादिति परिग्रहः एवं सति शीलं विराहणं दट्ठुणं भावसंबंधो दृष्टिविकारेण मुखविकारेण वा स वा सा वा भावं दृष्ट्वा मामिच्छतीत्यभिप्रायं ज्ञात्वा संबंधो घटना स्यात् एतदेव व्याख्यानयति ॥

मूलगुणेसु चउत्थे, विगडिज्जंते विराहणा हुज्जा ।
नित्यक्खचिट्ठिमहुरा, गतो य भावं वियाणंति ॥

मूलगुणेव मध्ये चतुर्थे मूलगुणातिचारे विकथ्यमाने आलोच्यमाने विराधना शीलस्य भिन्नकथादिना प्रागुक्तस्वरूपेण भवति तथा निच्छक्ता धृष्टा सती यांचां या कुर्यात् तथा दृष्टिरागतो मुखरागतोवा परस्य भावं विजानीते यथा मामेप एपा वा इच्छतीति ततो घटना स्यात् न केवलमेते विपक्षे आलोचनायां दोषः किंत्विमेऽपि तानेवाह ॥

अप्पच्चयनिब्भया, पिल्लणया जइपगासणे दोसा ।
वयणी वि होइ गुम्मा, नियए दोसे पगासिंति ।
वंदत्त वा उद्धे वा, गच्छो तह लहुसगत्तणाण गयो ।
विगमिंतपि जल्लिउदुं, दद्रूणदाहकुवियन्नू ॥

यतः संयत्याः पुरतः प्रकाशने आलोचनायामिमे दोषाः तद्यथा अप्रत्ययः किमेषा वराकी जानातीति तदाज्ञातो यत्किमपि सा प्रायश्चित्तं ददाति तत्र विश्वासाभावः । तथा भूयोऽप राधकरणे गुर्वोरीयांसं दंडं दास्यतीति महत्याशंका संयती नां तु पुरुषस्य न भयमिति निर्भयता तद्भावाच्च भूयोभूयोऽपराधकारण प्रवृत्तिस्तथा ( पेल्लणयेति ) यदि महत्प्रायश्चित्तं ददाति ततः संयतो ब्रूते न भवत्येतत्प्रायश्चित्तं किंचिदमित्येवं प्रायश्चित्तस्य प्रेरणा । तथा व्रतिन्यपि यदि संयतस्य पुरत आलोचयति ततः सा निजकान् दोषान् प्रकाशयंती गम्या भवति यथा एकवारं तावदिदमाचरितं भूयोऽपि संप्रति मया सह स समाचर्यतां पश्चात्प्रायश्चित्तं दास्यते इति द्वितीयगाथा संप्रदायात् व्याख्येया । यद्येवं तर्हि कथं पूर्वमार्यिकाः छेदश्रुतमधीयरन् कथं चालोचनां ददुस्तदुत्तरमाह ।

ततो जाव अज्जरक्खिय, आगमववहारिणो वियाणत्ता ।
न भविस्सति दोसो, त्तितो वायंती छेदसुयं ॥

यावदार्यरक्षितास्तावदागमव्यवहारिणोऽभूवन्ते चागमव्यवहारबलेन विज्ञाय यथा एतस्याश्छेदश्रुतवाचनायां दोषो न भविष्यतीति सयतीमपि छेदश्रुतं वाचयंतिस्म ।

आरेणागमरहिया, मा विद्दाहिं तितो नवाएंति ।
तेण कहं कुव्वंत, सोहितु अपाणमाणीतो ॥

आर्यरक्षितादारत आगमरहितास्ततस्ते माच्छेदश्रुताध्ययनतः संयत्यो विद्रास्यंति विनङ्क्ष्यंतीति हेतोश्छेदश्रुतानि संयतीर्न वाचयंतीति । अत्राह । तेन छेदश्रुताध्ययनाभावेन कथं ताः संयत्योऽजानानाः शोधिं कुर्वंतु । अत्राचार्य आह ( ततो जाव अज्जरक्खियसगणे पगासइ सुवणीला । असतीए विवक्खंमि वि एमेव य होंति समणावि ) यतः पूर्वमागमव्यवहारिणः स्युश्छेदश्रुतं च संयत्योऽधीयेरन् ततो यावदार्यरक्षितास्तावत् व्रतिन्याः स्वस्थाने स्वपक्षे संयतीनां प्रकाशने प्रकाशनामकार्पुः स्वपक्षाभावे विपक्षेऽप्यालोचितवंत्यः श्रमण्यः । एव मेव श्रमणा अपि भवंति ज्ञातव्याः । किमुक्तं भवति । श्रमणा अपि सपक्षे आलोचितवंतस्तदलाभे विपक्षेऽपि श्रमणी नां प श्र्वे इत्यर्थः दोषाभावात् । आगमव्यवहारिभिर्हि दोषाभावमवबुध्य छेदश्रुतवाचना संयतीनां दत्ता नान्येथति । आर्यरक्षितादारतः पुनः श्रमणानामेव समीपे आलोचयति श्रमण्योऽपि श्रमणानामागमव्यवहारच्छेदादत्रैव परमतमाशंक्य दूषयति ॥

मेहुणवज्जं आरेण, केइ समणेसु ता पगासंति ॥
तंतु न जुज्जइ जम्हा, लहुसगदोसा सपक्खेवि ॥

आर्यरक्षितादारतः श्रमणेषु श्रमणानां पार्श्वे ताः श्रमण्यः प्रकाशयंत्यालोचयंति मैथुनवर्ज्यं मैथुनं पुनः श्रमण्यः श्रमणी-

नामेव सकाशे आलोचयंति इति केचिद् व्याचक्षते तत्तु न युज्यते यस्मात् लघुत्वकदोषाः सपक्षेऽपि । किमुक्तं भवति । श्रमण्यो ऽपि स्वकलघुदोषतस्त्वन्यत्वपस्त्वकदोषतःपरिस्रावित्वं कुर्युः परिभवं वा समुत्पादयेयुस्तस्मान्मेधुनमपि श्रमणानामेवांतिके विकटनीयं ।

असती कयजोगी, पुण मुत्तूण संकियाइँ ठाणाइँ ॥

आइंनो धुवकम्मिय, तरुणी थेरस्स दिट्ठिपहे ॥ १ ॥

आर्ययकाऽतिकाऽपि यदि संयत्या मूलगुणापराधआलोचार्य-तम्यस्तर्हि संयत्याः सकाशे आलोच्यते । तस्याऽसति अत्र ये यः कृतयोगी कृतः सूत्रतोऽर्थतश्च छेदग्रंथधरः स्थविरस्तस्य समीपे आलोचयति नवरं शंकितानि स्थानानि वक्ष्यमाणानि शून्यगृहादीनि मुक्त्वा किन्वाचीर्णे उचिते प्रदेशे आलोचयितव्यं यत्र ध्रुवकर्म्मिको दृष्टिपथे वर्तते दृष्ट्या पश्यति न तु शृणोति । तत्र जवनिकांतरिता आलोचयति । तरुणी थेरस्येत्येष तृतीयभंग उपात्तः । स च शेषभंगानां त्रयाणामप्युपलक्षणं । ते चेमे । स्थविरा स्थविरस्यालोचयति १ स्थविरा तरुणस्यालोचयति २ तरुणी स्थविरस्यालोचयति ३ तरुणी तरुणस्य ४ यदुक्तं मुक्त्वा शंकितानि स्थानानि ॥

संप्रति तान्येवोपदर्शयति ॥

सुन्नघरदेउलुज्जाण, रछापच्छन्नवज्जयसंतो ॥

एयंविवज्जे ठायंति, तिगिचउरोहवा पंच ॥ १ ॥

शून्यगृहं देवकुलं उद्यानमरण्यं प्रच्छन्नं च स्थानम् तथा उपाश्रयस्यांतर्मध्ये एतद्विवर्ज्य एतद्रहिते प्रदेशे आलोचना-निमित्तं तिष्ठंति । ते च जघन्यतस्त्रयो यदि वा चत्वारोऽथवा पंच ते च त्रिप्रभृतयो वक्ष्यमाणभंगकानुसारेण प्रतिपत्तव्याः भंगकानेवाह ॥

थेरतरुणेसु भंगा, चउरो सव्वत्थपरिहरे दिट्ठिं ॥

दोएहंपुण तरुणाणं, थेरे थेरी यभचउत्थं ॥ १ ॥

स्थविरतरुणेषु भंगाश्चत्वारस्ते च प्रागेवोपदर्शिताः । स्थविरा स्थविरस्यालोचयंतीत्यादि ॥ तत्र यदि जवनिकाया अवकाशो नास्ति ततः सर्वत्र चतुर्ष्वपि भंगेषु दृष्टिं परिहरेत् । भूमिगत दृष्टिका सती आलोचयेत् यथा आलोचनार्हः शृणोति तत्र चतुर्भंगे द्वयोःस्थविरः स्थविरा च प्रत्यासन्नौ । प्रत्यासन्नौ सहायौ दीयेते । येन परस्परं तौ दृष्टिं न बध्नीतोनापि मुख विकारं कुरुतः । एवमस्मिन् चतुर्थे भंगे चत्वारो भवंति ॥

थेरो पुण असहाओ, निग्गंथी थेरिया वि ससहाया ।

सरिसवयं च विवज्जे, असती पंचमं कुज्जा ॥ १ ॥

तृतीयभंगे पुनः स्थविरोऽसहायोऽपि भवतु । तरुण्यः पुनः स्थविरासहाया दीयते । द्वितीयभंगे निर्ग्रंथी स्थविराऽपि ससहाया कर्तव्या । तरुणस्याऽलोचनार्हस्य सहायोऽस्तु वा न वा कश्चिद्दोषः । एवं तृतीये द्वितीये च भंगे त्रयो जना भवंति । तथा सदृशवयो नियमतः सहायानां विवर्जयेत् तद संभावे सदृशवया अपि भवेत् । तत्र प्रथमभंगे चतुर्थभंगे वा सदृशवयः सहायसंभवे पंचमक्षुल्लकक्षुल्लिकां वा पट्टकां कुर्यात् ॥

ईसिं अणोयतानिया, उ आलोचयए विवक्खंमि ।

सारिपक्खे उक्कुडु, पंजालेचिठोवणुन्नातो ॥

विपक्षे श्रमणस्य समीपे श्रमणी आलोयति ईषत् अवनता कायोर्ध्वस्थिताः सदृशपक्षे पुनः श्रमणः श्रमणस्य पार्श्वे पुनरुत्कुटुका । कृतप्रांजलिरालोचयति । अथ सोऽर्शोव्याधिपीडितस्ततोऽनुज्ञापनां कृत्वा अनुज्ञातः सन् निषद्यामुपविष्टमालोचयति ॥

दिट्ठीए होंति गुरुगा, सविकाराओ सरत्तिसा जणिया ।

तस्स विवड्ढितरागे, तिगिच्छजयणाए कायव्वा ॥

यो दृष्ट्वा दृष्टिं बध्नाति तस्य दृष्टौ सविकारायां भवंति प्रायश्चित्ततया चत्वारो गुरुकास्तत्र ये ते द्वितीयका दृष्टास्ते यदि एकतर पश्यति तत आलोचनातोऽपसारयंति यथा अपसरतापसरत यूयं न किमप्यालोचनया प्रयोजनमिति । अथ सा निर्ग्रंथी स्वभावत एवोपलक्षशरीरा सविकारा दृष्टा अपसरेति भणिता सती अपसृता तथापि तस्याऽलोचनाचार्यस्य यदि तस्या उपरि विवर्द्धितो रागस्तर्हि तस्मिन् सति यतनया चिकित्सा कर्तव्या ॥

तामेवयतनामाह ॥

अणोहिं पगारेएहिं, जाहो नियत्तेउं से न तीरति अ ॥

घेत्तूण जरणाइति, गच्छजयणाए कायव्वा ॥

यदा अन्यैः प्रकारैस्तं भावं निवर्तयितुं न शक्नोति तदा तस्याः संयत्या आभरणानि वस्त्राणि गृहीत्वा यतनया चिकित्सा कर्तव्या ॥

एतामेवाह ॥

जारिसवएहिं भिया, तारिसएहिं तमसती चरिया ॥

संजलिविणोयकेयण, वेसवणं चिहुरगंमेहिं ॥

यादृशैः सचित्रैर्वस्त्रैः प्रावृतः सा संयती उपविष्टा दृष्टा तादृशैर्वस्त्रैस्तमोऽधकारमस्यास्तीति तमस्वती रात्रिस्तस्यां तरुणसाधुर्वस्त्रैः प्रावृतः क्रियते ततः संज्वलीति दूती प्रेष्यते ततो विनाविनोको नरविहीनो य ओको निवासो गृहमित्यर्थः । तत्र केतनं संकेतो दीयते दत्वा च स तत्र स्थितस्तावत्तिष्ठति यावत्स तरुणसाधुः संयतीनेपथ्योपेत आगच्छति । तस्मिंश्चागते चिकुरेषु केशेषु गंधयोग्य विलेपनं क्रीडनं करोति तत्र यद्येता वता शुक्रनिपाततस्तिष्ठति ततः सुंदरं । अथ नोतर्हि संयत नेपथ्योऽपसार्यते प्रकारांतरमारभ्यते ॥

तदेव प्रकारांतरमाह ॥

अहवा वि सिद्धपुत्तिं, पुव्विं गमेऊण तीए सिवएहिं

आवरियकालियाए, सुसमागरादिसंगेछो ॥

अथवेति प्रकारांतरद्योतने पूर्वं सिद्धपुत्रीं गमयित्वा तस्याः सयत्याः शिवायैरावृत्य कालिकायां कृष्णायां रात्रौ शून्यगृहादिषु तया सह तस्य मेत्रः संगमः कर्तव्यः । व्य. ॥

सा चोलाचनाऽऽचार्य्याशिष्यभावे भवति तत्र च शिष्या चार्य्याणामियं मर्य्यादा सामाचारि पच्छित्तशब्दे ॥

सम्प्रति यादृशा उत्सर्गत आलोचनार्हास्तानभिधित्सुराह ॥ व्य० ५ उ० ॥

गीयत्था कयकरणा, पोढा परिणामिया य गंभीरा ।

चिरदिक्खिया य वुड्ढा, जईणं आलोयणा जोगा ॥

गीतार्थाः सूत्रार्थतदुभयनिष्णातत्वात् कृतकरणा अनेकवारमालोचनायां सहायीभवनात् प्रौढाः समर्थाः सूत्रतोऽर्थतश्च प्रायश्चित्तदाने पश्चात्कर्तुमशक्यत्वात् परिणामिकावाऽपरिणामिका वा गंभीरामहत्यप्यालोचकस्य दोषे श्रुते अपरिश्राविणश्चिरं दीक्षिताः प्रभूतकं प्रव्रजिता वृद्धाः श्रुतेन

पर्यायेण वयसा च महांत एवंभूता यतीनां साधूनामुपलक्षणमेतत् संयतीनां चालोचनायोग्याः ॥ व्य. उ. ५ ॥

तथाच महानिशीथे

नयत्तं कस्स लोएज्जा, पच्छित्तं को वदिज्ज वा ।
कस्स व पच्छित्तं देज्जा, आलोवेज्जा वा कहंगो ॥

लोयणं ताकेवलीएवहूसुवि । जोयणसएहिं गंतुणं सुफ्फभावेहिं दिज्जए । चउनाणीणं तया भावे एवं । ओहिमईसुजस्स विमलयरे तस्स तारतम्मेण दिज्जई । उमग्गपन्नवितस्स उस्सग्गोपट्ठियस्स य । उसग्गरयणो चेव सव्वभावं तरेहिणं । १ । उवसंतस्स दंतस्स संजयस्स तव.स्सिणो । सुमिती गुत्तीपहाणस्स दढवीरितस्स अस ढभाविणो । २ । आलोएज्जा पच्छित्तं देज्जादा विज्जभा परं । अहन्निसंत दुद्दिट्ठं पायच्छित्तं अणुचरो ॥ ३ ॥

पंचा० वृ. १५ आचारवान् ज्ञानासेवावदां ज्ञानादिपंचप्रकाराचारयुक्तोऽयं हि गुणत्वेन श्रद्धेयवाक्यो भवति । तथा ( आहारवत्ति ) अवधारः आलोचकोक्तापराधानामवधारणा तद्वान्सहिसर्वापराधेपु यथावत् शुद्धिदानसमर्थो भवति तथा ( ववहारत्ति ) मतुब्लोपादूव्यवहारवान् आगमश्रुताऽऽज्ञाधारणा जीतलक्षणपंचप्रकारव्यवहाराऽन्यतरयुक्तः व्यवहारवांश्च यथा वत् शुद्धिकरणसमर्थो भवतीति तथा ( ओवीलएत्ति ) लज्जया अतिचारान् गोपायंतमुपदेशविशेषैरपव्रीडयति विमतलज्जां करोतीत्यपव्रीडकः अयं ह्यालोचकस्यात्यंतमुपकारको भवतीति अवधारादिपदत्रयस्य च कर्मधारयःकार्यः तथा ( पकुव्वीति ) आलोचिताऽतिचाराणां प्रायश्चित्तदानेन शुद्धिप्रकर्पेण कारयतीत्येवंशील इत्येतदर्थस्य सामायिकस्य कुर्वतोदर्शनात् प्रकुर्वी आचारवत्वादिगुणयुक्तोऽपि कश्चिन्न शुद्धिदानं नाऽभ्युपगच्छतीत्यतस्तद्व्यवच्छेदार्थं प्रकुर्वीत्युक्तं । चः समुच्चये । तथा ( निज्जवत्ति ) प्राकृतत्वान्निर्यपकोपपत्तेः प्रायश्चित्तस्य निर्वापकोऽयं हि तथा विधत्ते यथा साधुर्महदपि प्रायश्चित्तं वोढुं शक्नोत्यत एवायमिहमहोपकारीति तत्तथा अपायान् दुर्भिक्षदुर्बलत्वादिकानैहलौकिकानर्थान् पश्यति । अथवा दुर्लभबोधिकत्वादिकान् पारलौकिकान् सातिचाराणां तान् दर्शयतीत्येवं शीलोऽपायदर्शी अयं चात एवाऽऽलोचकस्योपकारी तथा न परिश्रवति आलोचकोक्तमकृत्यमन्यस्मै न निवेदयतीत्येवं शीलोऽपरिश्रावी तदन्यो ह्यालोचकाणां लाघवकारी स्याचः समुच्चये । वोद्धव्यो ज्ञेय इति आलोचनाचार्य इति योगः ॥ पं. चू. ।

तहपरहियम्मि जुत्तो, विसेसओ सुहुमभावकुसलमती ।
भावाणुमाणवं तह, जोग्गो आलोयणायरिओ १५

तथेति समुच्चये । परहिते परोपकारे युक्तः उद्युक्त उद्यत इत्यर्थः । तदन्यो हि परेपामवधारको भवति । तथा विशेषत आचार्यान्तरापेक्षया विशेषेण सूक्ष्मभावकुशलमतिः लोकशास्त्रगताऽस्थूलार्थनिपुणबुद्धिः अत एव भावानुमानवान् परचेतसामिंगितादिभिर्निश्चायकः । अयं हि परभावानुसारेण शुद्धिदाने शक्तो भवति । तथेति समुच्चय योग्य उचित आलोचनाचार्यो विकटना गुरूक्तगुणकलापशून्यो हि न शुद्धिकरणक्षम इति गाथारूपार्थः ॥ पंचा. वृ. १५।

तथा च स्थानांगे—स्था० ॥ ठा. ८

( १८ ) आलोचनाया अष्टौ स्थानकाः दशस्थानकाश्च ॥

अट्ठहिं ठाणेहिं संपन्ने अणगारे अरिहइ आलोयणा पडिच्छित्तए । तं जहा । आयारवं आहारवं ववहारवं उव्वीलए पकुव्वए अपरिस्सावी णिज्जवए अवायदंसी ॥

अट्ठहीत्यादि । सुगमं । नवरं । आयारवंति । ज्ञानादिपंचप्रकाराचारवान् ज्ञानासेवनाभ्यामाहारवांति अवधारणावान् आलोचकेनालोच्यमानानामतिचाराणामिति आह च ।

आयारवमायारं, पंचवि मुणाई जोय आयरइ ।
आहारवमहारे, आलोइ तस्स तं सव्वंति ॥

ववहारवति आगमश्रुताज्ञाधारणजीतलक्षणानां पंचानामुक्तरूपाणां व्यवहाराणां ज्ञातेति ( उव्वीलएति ) अपव्रीडति विलज्जीकरोति यो लज्जया सम्यगनालोचयन्तं सर्वं यथा सम्यगालोचयति तथाकरोतीत्यपव्रीडकः अभिहितं च ॥

ववहारवन्हरं, आगममाइ उ मुणइ पंचविहं ।
ओवी लुवगूहंतं, जह आलोए इत्तसव्वं.ति । १ ।

( पकुव्वएत्ति । ) आलोचिते सति यः शुद्धिं प्रकर्पेणं कारयति संप्रकारोति भणितं च ( आलोयइयंमि सोहिं जो कारावेइ सो पकुव्वीओत्ति । अपरिस्सात्ति ) न परिश्रवति नालोचकदोषादुपश्रुत्याऽन्यस्मै प्रतिपादयाति य एवंशीलः सोऽपरिश्रावीति यदाह ( जो अन्नस्स उ दोसे न कहेइ अपरिसाइ सो होइति । ) ( निज्जवएति ) निर्यापयति तथा करोति यया गुर्वपि प्रायश्चित्तं शिष्यो निर्वाहयतीति निर्यापक इति भणादि च ( निज्जवओ तह कुणइ निव्वहेईजेण पच्छित्तंत्ति । ) ( अवायदंसिति । ) अपायाननर्थान् चित्तभंगानिर्वाहादीन् दुर्भिक्षदौर्बल्यादिकृतान् पश्यतीत्येवंशीलः सम्यगनालोचनायां च दुर्लभबोधिकत्वादीनपायान् शिष्यस्य दर्शयतीत्यपायदर्शीति भणितं च ॥

दुब्भिक्खदुब्बलाइ, इहलोएजाणए अवाएउ ।
उदंसेइय परलोए, दुल्लहबोहित्तसंसारोत्ति ॥ १ ॥

भ० १५ श० ७ उ० । स्था० ठा० ८ ।

दसहिं ठाणेहिं संपन्ने अणगारे अरिहइ अत्तदोसं आलोयणं पडिच्छित्तए तंजहा आयारवं आहारवं जाव अवायदंसी पियधम्मे दढधम्मे । ठा. १०

अधिकमिह प्रियधर्माधर्मे प्रियो दृढधर्माय आपद्यपि धर्मान्नचलतीति । आलोचितदोषाय प्रायश्चित्तं देयम् ।

अट्ठहिं ठाणेहिं संपन्ने अणगारे अरहइ अत्तदोसं आलोएत्तए । तंजहा । जाइसंपन्ने कुलसंपन्ने विणयसंपन्ने नाणसंपन्ने दंसणसंपन्ने चरितसंपन्ने खंते दंते ।

टी० ( अत्तदोसत्ति ) आत्मापराधमिति जातिकुले मातापितृपक्षौ तत्सम्पन्नः प्रायोऽकृत्यन्न करोति कृत्वाऽपि पश्चातापादालोचयतीति तद्ग्रहणं यदाह ॥

जाइकुलसंपन्नो, पायमकिच्चं न सेवइ किंचि ।
आसेविउंचयच्छा, तग्गुणओसम्ममालोएत्ति ॥

विनयसंपन्नः सुखेनैवालोचयति तथा ज्ञानसंपन्नो दोषविपाकं प्रायश्चित्तं वावगच्छति यतो ॥

णा विन्नाणेउ संपन्नो, दोसविवागं वियाणिओ घोरं ।
आलोएइ सुहं चिय, पायच्छित्तं च अवगच्छेत्ति ॥ १ ॥

दर्शनसंपन्नः शुद्धोऽहमिति एवं श्रद्धत्ते चरित्रसंपन्नो भूयस्तमपराधं न करोति सम्यगालोचयति प्रायश्चित्तं च निर्वाहयति इति उक्तं च ॥

सुद्धो तहत्ति सम्मं, सद्दहई दंसणेण संपन्नो ।
चरणेणउ संपन्नो, न कुणइ भुज्जो तमवराहंति ॥२॥

क्षान्तः परुषं भणितोऽप्याचार्येण रुष्यतीति । आह च ॥

खंतो आयरिएहिं, फरुसं भणिओ वि न विरूसेति ॥

दान्तः प्रायश्चित्तं दत्तं वोढुं समर्थो भवतीति । आह च ॥

दंतो समत्थो वोढुं पच्छित्तं जमिह दिज्जए तस्सत्ति ॥
॥ स्था० ८ ठा० ॥

दसहिं ठाणेहिं संपन्ने अणगारे अरिहइ अत्तदोसं आलोइत्तए । तं जहा । जाइसंपन्ने कुलसंपन्ने एवंजहा अट्ठट्ठाणे खंते दंते अमाई अपच्छाणुतावी ॥ ठा० १०

(एवंति) अनेन क्रमेण यथा अष्टस्थानके तथेदं सूत्रमध्येयमित्यर्थः कियद्दूरं यावत् ( खंतेदंतेत्ति ) पदे तथाहि ॥

विणयसंपन्ने नाणसंपन्ने दंसणसंपन्ने चरणसंपन्नेत्ति ।
अमाईअ पच्छाणुतावीति ॥

पदद्वयमिहाधिकं प्रकटं च नवरं ग्रन्थान्तरोक्तं तत्स्वरूपमिदम् ॥

नोपच्छिउं चेमाई, अपच्छयावो न परितप्पेति ॥

(१७) सामुदानिकातिचारालोचना ।

ओघनिर्युक्तौ सामुदानिकानतिचारानधिकृत्य इदानीं सामुदानिकानतिचारान् आलोचयति यदि व्याक्षेपादिरहितो गुरुर्भवति अथ व्याक्षिप्तो भवति । तदा नालोचयतीत्येतदेवाह ।

वि.क्खित्तपराहुत्ते, विप्पमत्ते माकयाइआलोए ।
आहारं च करेंतो, णीहारं वा जइ करेइ ॥ ७०२ ॥

व्याक्षिप्तो धर्मकथादिना स्वाध्यायेनापराहुत्तो पराङ्मुखः अन्यतोऽभिमुखः प्रमत्तः विकथयति एवं विधे गुरुन् कदाचिदालोचयेत् तथा आहारं कुर्वति सति तथा नीहारं वा यदि करोति ततो नालोचयति । इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह ।

दारगाहा ।

कहणाइवक्खित्ते, विगहाए पमत्त अन्नओ ।
वमुहो अंतरमकाए, वाणीहारे संकमरणं वा ॥७०३ ॥

धर्म्मकथादिना वा प्रमत्तः अन्यतोऽभिमुखो वा भवति भुंजतेऽपि वा नालोचनीयं किं कारणं ( अंतरति ) अंतरायं भवति यावदालोचनां शृणोति अकारकं वा शीतलं भवति यावदालोचनां वा शृणोति तथा नीहारमपि कुर्वतो नालोचनीयं किं कारणं यत् आशंकया साधुजनितया कायिकादि निर्गच्छति अथ धारयति ततो वा मरणं भवति यस्मादेते दोषास्तस्मात् ।

अव्वक्खित्ताउत्तं, उवसंतमुवट्ठियं च नाऊणं ।
अणुण्णवेत्तमहावी, आलोएत्ता सुसंजए ॥ ७०४ ॥

धर्म्मकथादिना व्याक्षिप्ते गुरौ आलोचयेत् आयुक्तमुपयोगतत्परं उपशांतमनाकुलगुरुं दृष्ट्वा उपस्थितमुद्यतं च ज्ञात्वा एवंविधं अनुज्ञाप्य मेधावी आलोचयेत् सुसंयुतः साधुः । इदानीमेतामेव गाथां व्याख्यानयन् भाष्यकृदाह ॥

कहणाई अवक्खित्ते, कोहाइ अणाउले तदुवउत्ते ।
संदिसहत्ति अणुन्ना, काउण विदिन्न मालोए ॥ ८५॥

धर्मकथादिना व्याक्षिप्तोकोधादिभिरनाकुले तदुपयुक्ते भिक्षालोचनोपयुक्ते ( संदिसहति ) अनुज्ञं काऊण संदिसत आलोचयामीत्येवं अनुज्ञां कृत्वा मार्गयित्वेत्यर्थः ( विदिन्नत्ति ) आचार्येण दत्तायामनुज्ञायां भणत इत्येवं लक्षणायां तत आलोचयेत् ।

तथा च पञ्चाशकेऽर्हद्वारविवरणायाह पंचा० वृ० १५

संविग्गोउव मादी, मइमं कप्पट्ठिओ अणासंसी ।
पण्णवणिज्जो सड्ढो, आणाइत्तो दुक्कडतावी ॥१२॥
तव्विहिसमूसुगो खलु, अभिगाहासेवणादिलिंगजुत्तो ।
आलोयणापयाणे, जोगो भणितो जिणिंदेहिं ॥१३॥

व्या० संविग्नस्तु संसारभीरुरेवाऽऽलोचनाप्रदाने योग्यः इति योगः । तस्यैव दुष्करकरणाध्यवसायित्वात् दुष्करं चालोचनादानं यदाह ( अविरायाचराऽऽज्जंनयदुच्चरियं कहे ) तथा अमायी अशठः यादीहि न यथा यावत् दुष्कृतं कथयितुं शक्नोति तथा मतिमान् विद्वांस्तदन्यो ह्यालोचनीयादिस्वरूपमेव नजानाति । तथा कल्पस्थितः स्थविरजातसमासकल्पादिव्यवस्थितादन्यस्य ह्यतीचारविषया जुगुप्सैव न स्यात् यथा अनाशंसी आचार्याद्याराधनाधारहितः सांसारिकफलानपेक्षो वा । आशंसिनो हि न सम्यग्तिचारालोचना संभवत्याशंसाया एवातिचारत्वात् । तथा प्रज्ञापनीयः सुखाववोध्यस्तदन्यो हि स्वाग्रहादकृत्यविपर्यासान्निवर्तयितुं न शक्यते तथा श्राद्धः श्रद्धालुः स हि गुरूक्तां शुद्धिं श्रद्धत्ते । तथा आज्ञावान् आप्तोपदेशवर्त्ती सहि प्रायोऽकृत्यं न करोत्येव तथा दुष्कृतेनातिचारासेवनेन तप्यते । अनुतापं करोत्येव शीलः दुष्कृततापी स एव तदालोचयितुं शक्नोतीति । तथा तद्विधिसमुत्सुकः खल्वालोचनाकल्पनालस एव स हि तद्विधिं प्रयत्नेन परिहरति । तथा अभिग्रहासेवनादिभिर्द्व्यादिभियमविधानविधायनानुमोदनप्रभृ तिर्लिंगैरालोचनायोग्यतालक्षणैर्युतो युक्तोयः स तथा । आलोचनाप्रदाने प्रतीते योग्योऽर्हो भणित उक्तोजिनेन्द्रैस्तीर्थकरैरिति गाथाद्वयार्थः । ओघ. ॥

किमेतावन्त एव करणीययोगा आहोस्विदन्येऽपि सन्तीत्याह ।

जं चन्नं करणिज्जं, जेयणो हत्थसयत्राहिगयारियं ।
अविगडयम्मि असुद्धो, आलोयंतो तयं सुद्धो ॥७॥

यच्च पूर्वोक्तकरणीयव्यापारेभ्योऽन्यद्यत्तत्करणीयं क्षेत्रप्रतिलेखनार्थादिद्वान्वेषणशङ्कानिष्क्रमणाचार्यसंलेखना दिहस्तशतोद्बहिराचरितं तस्मिन्पूर्वोक्ते च करणीययोगनिवहे अविकटिते गुरोरप्रकाशितेऽनालोचिते अशुद्धः समित्याद्यतिचारलेशवान् आलोचयंस्तं करणीययोगनिवहं शुद्धः आलोचनाख्यप्रायश्चित्तेन समित्याद्यतिचारलेशस्य निवर्त्तनाद्धस्तशतान्यन्तराचरितं किञ्चित्प्रश्रवणादिकमालोच्यते । किंचिच्च खेलसंधानजल्लनिवसनोत्थानविजृम्भणाकुञ्चनप्रसारणोच्छ्वासनिः श्वासचेष्टादिकन्नालोच्यते ॥ अत्राह शिष्यः । करणीययोगेष्वाहारादिग्रहणाद्येषु यथोक्तविधिना कृतेष्वपि यथा-

लोचनाप्रायश्चित्तयोग्यता भवति । तर्हि न किमपि कर्तव्यं व्रतमादाय प्रथममेव सर्वैरप्यनशनङ्कार्य्यं । गुरुराह । तन्न । एवं सति तीर्थोच्छेदः स्यात् । कः केन प्रतिबोध्य इष्यते । किञ्च न खलु मालिन्याऽऽशंकया वस्त्राणि न परिधीयन्ते । अपरिधानेऽर्हि विवस्त्रंतथा सर्वेषांपशुरूपतापत्तिस्ततःपरिधीयंत एव । जातमालिन्यानि च जलेन प्रक्षाल्य निर्मलीक्रियन्ते । एवं चारित्रमपि करणीययोगकरणे संजातातिचारलेशमलं आलोचनाप्रायश्चित्तजलेन विशोध्य निर्मलीकार्य्यं ॥

अतिचारलेशवशतोऽपि तच्छुद्धये भवत्यालोचना परं निरतिचारस्य किमित्याह ।

कारणविणिग्गयस्सय, सगणाउपरगणागयस्स विय ।
उवसंपयाविहारे अ, आलोयणनिरयारस्स ॥ ए ॥

टीका । कारणेनाऽशिवदुर्भिक्षराजादिप्रत्यनीकत्व श्लाने, समार्थिविराधनागुर्व्वादेशाद्विनिर्गतस्य निरतिचारस्याऽथ विराधितसमितिगुप्तिकस्याऽप्यालोचना भवति । सा च द्विधा । ओघतो विभागतश्च । तत्र यः कारणविनिर्गतः पक्षान्यन्तरे समागच्छति । आगतमात्रश्चेर्य्यापथिकीम्प्रतिक्रम्य समुद्देशवेलाया अर्वागेवाऽऽलोचयति । तस्याऽप्योघालोचनामात्रं भवति ॥ यथा ॥

अप्पा मूलगुणा सुविराहणा, अप्पा उत्तरगुणेसु ।
अप्पा पासत्थाइसु, दाणगह संपउगोहा ॥

अल्पशब्दोऽभाववाचीतिन मूलगुणेषु विराधना अल्पा न कदाचिदुत्तरगुणेष्वप्यल्पा न काचित्पार्श्वस्थावसन्नादिषु दानग्रहाभ्यां संप्रयोगः सम्पर्कः सोऽप्यल्पः । सोऽपिनासीदित्यर्थः इयमोघालोचना । यस्तु पक्षान्यन्तरागतोऽपि समुद्देशानन्तरमालोचयति । यावत्पक्षात्परतः समागतः समुद्देशादर्वागप्यालोचयति । तयोर्निरतिचारयोरपि विभागालोचना विशेषालोचना सुव्यक्ता । निःशेषनिजाऽनुष्ठितनिवेदनरूपा । वस्तुतक्षशिलायां धर्मचक्रस्य मथुरायां स्तूपस्य पुरुकायां जीवत्स्वामिप्रतिमायाः तीर्थकृज्जन्मनिःक्रमणज्ञाननिर्वाणभूमीनामयोध्यादीनां दर्शनार्थं स्वजनगोकुलविवाहादि संखडिकाप्रेक्षार्थं यत्र विशिष्टाहारोपधी लप्स्येति । तत्र लिप्सया रम्यदेशदिदृक्षयादिना चागुर्वनादेशाद्विनिर्गतोऽकारणविनिर्गतस्तस्य साऽतिचारत्वेन वृहत्तरप्रायश्चित्तशोध्यत्वान्नालोचनामात्रेण शुद्धिः । तथा स्वगणात्सांभोगिकरूपादेकमंडली भोजिनः उभयतोऽपि संविग्ना संविग्नरूपादागतस्याऽपि च निरतिचारस्य उपसंपयत्ति उपसंपद्यमानस्य सा चोपसंपत् पंचधा । श्रुतग्रहणायान्यमाचार्य्यमुपसम्पद्यमानस्य श्रुतोपसंपत् २मार्गेव्रजतोमयोप्माकी निश्रेतिमार्गोपसंपत् ४ विनयं कर्तुं गच्छांतरमुपसंपद्यमानस्य विनयोपसंपद् ५ भाष्यकृताऽप्युक्तं ॥

उपसंपयपंचविहा, सुय सुहदुक्खे य खित्तमग्गे य ।
विणउपसंपयाविविय, पंचविहा होइ नायव्वा ॥

एतासामन्यतरामुपसंपदं प्रथममाददानस्य विभागालोचना भवति । विहारत्ति । विहारे कृते निरतिचारस्याऽप्यालोचना भवति । अयंभावः । एकाहात्पक्षात्पर्वाग्वा यदा सांभोगिकाः स्पर्द्धकपतयो गीतार्थाचार्य्या मिलन्ति । तदा निरतिचारेऽप्यन्योन्यस्य विहारालोचनां स्वस्वविहारक्रमानुष्ठितप्रकाशरूपां ददतीति ॥ जीत. ॥

( १० ) आलोचयित्रा एतानि वर्जनीयानि ॥

णट्टं चलं भासं मूयं तह ढंढर च वज्जेज्जा ॥
आलोएज्जा सुविहिओ, हत्थं मत्तं च वावारं ॥७६॥

नृत्यन्नाऽऽलोचयति । चलंश्च नाऽऽलोचयति । अङ्गानि चालयन्नालोचयति । तथा गृहस्थभाषया नालोचयति । किं तर्हि संयतभाषया आलोचनीयमिति । तद्यथा । " मुयारियाओ " इत्येवमादि, तया आलोचयन् केन स्वरेण नालोचयति मिणि मिणे ? तथा ढड्डरेण च स्वरेण उच्चैर्नालोचयति । एवं विधं स्वरं वर्जयेत् । किम्पुनरसावालोचयतीत्येतदाह ॥

आलोचयेत्सुविहितःहस्तमुदकस्निग्धं तथामात्रकं गृहस्थसत्कं कटच्छुकादि उदकाद्रार्दि तथा गृहस्थया कृतमव्यापारकुर्व्वता तदेतच्चालोचयति । इदानीमेनामेव गाथां व्याख्यानयन्नाह ॥

करपायस्समुह, सीसस्थि उट्टमाईहिण ढिएणाम ॥
चलणं हत्थसरीरे, वलणं काए भूयनावे य ॥ ७७ ॥

करस्य तथा पादस्य भ्रुवशिरसः अक्ष्णः ओष्ठस्य चैवमादीनामङ्गानां साविकारं चलनं नर्तितं नाम तच्च नर्तितं कुर्व्वन्नालोचयति । चलनं हस्तस्य शरीरस्य कुर्व्वन्नालोचयति । तथा चलनं कायस्य करोति मोटनं कुर्व्वन्नालोचयति तथा भावतश्चलनं अन्यथा गृहीतमन्यया आलोचयति ॥

अरुवियहुज्ज गारात्थिय, नासा उवज्जए मूयढड्ढरं च सरं ।
आलोएवाचारं, संसहियकरमत्तो ॥ ७८ ॥

आलोचयेत्गृहस्थभाषया न आलोचयति यदुत ( लंगणीउ लहाउ मंमलका लहा ) इत्येवमादि किन्तु संयतभाषया आलोचनीयं ( मुयारियाउ ) इत्येवमादि मूकस्वरे मनाक् ढड्डर च महान्तं स्वरं वर्जयित्वाऽऽलोचयति । व्यापारं गृहस्थाः संबन्धिनं तथा संसृष्ट उदकार्द्रादि इतरं असंसृष्टं किं तत्करं संसृष्टं असंसृष्टं च उदकेन तथा मात्रकं गृहस्थसत्कं केलिकादि उद कसंसृष्टंचेति । एतदालोचयति ॥ ओघ. । पं. व. ॥

तथाच स्थानाङ्गे ठा. १. ।

दस आलोयणादोसा पएणत्ता ।
आकंपइत्तु अणुमाणइत्तु, जं दिट्ठवायरं च सुहुमं वा ॥
छन्नं सद्दाउलगं, बहुजण अव्वत्ततस्सेवि ॥ १ ॥

टीका । आकम्प्य आवर्ज्येत्यर्थः । यदुक्तं ॥

वेयावच्चाईहिं पुव्वं, आकंपइत्तु आयरिए ॥
आलोएइ कहं मे, थोवं वियरेज्ज पच्छित्तंति ॥ १ ॥

( अणुमाणइत्ता ) अनुमानं कृत्वा किमयं मृदुदण्ड उतोग्रदण्ड इति ज्ञात्वेत्यर्थोऽयमभिप्रायोऽस्य । यद्ययं मृदुदण्डस्ततो दास्याम्यालोचनामन्यथा नेति उक्तञ्च ॥

किं एस उग्गदंडो, मिउदंडो वात्तिएवमणुमाणो ॥
अएणेयर्चितिओवं, पच्छित्तं मज्झदेज्जाहिति ॥ १ ॥

( जंदिट्ठाति ) यदेव दृष्टमाचार्य्यादिना दोषजातं तदेवालोचयति । नान्यद्दोषश्चायमाचार्य्यं रञ्जनमात्रपरत्वेनासंविग्नत्वा दस्येति । उक्तञ्च ॥

दिट्ठाव जेपरेणं, दोसावियमेयं तेचियए एणणे ॥
सोहिभया जाणंतु, वएसो पयावदोसोउत्ति ॥ १ ॥

( वायरंवति ) बादरमेवातिचारजातमालोचयति न सूक्ष्म मिति ( सुहुमंवत्ति ) सूक्ष्ममेव वातिचारमालोचयति । यः किल सूक्ष्ममालोचयति स कथं बादरं संतं नालोचयत्येवं रूपं भावसम्पादनायाचार्य्यस्येति । आह च ।

बायरवड्डवणहे, जो आलोएइ सुहुमनालोए ॥

अहवा सुहमाझोए वरमणंतंउएवं तु ॥ १ ॥
जो सुहमे आझोए, सो किह नालोय बायरे दोसाति ॥
( उच्चत्ति ) प्रच्छन्नमालोचयति यथात्मनैव शृणोति नाचार्यो भणितं ( उएणतह आलोए जह नवरं अप्पणा सुणइत्ति )
(सद्दाउलयत्ति) शब्देनाऽकुलं शब्दाकुलं बृहच्छब्देनालोचयति। यथान्येऽप्यगीतार्थास्तच्छृण्वन्तीत्यजाणि च । ( सद्दाउलयचट्टणं सद्देणालोय जह अन्नियाविधोहेत्ति बहुजणंति ) बहवो जना आलोचनाचार्या यस्मिन्नालोचने तद्बहुजनं । अयमभिप्रायः॥
एगस्सालोइत्ता जो, आलोएमणो वि अएणस्स ॥
ते चेवय अवराहे, तं होइ बहुजणं नामंत्ति ॥ १ ॥
( अव्वत्तेति ) अव्यक्तस्याऽगीतार्थस्य गुरोः सकाशे यदालोचनं तत्तत्संबन्धादव्यक्तमुच्यते । उक्तञ्च । ( जो य अगीयत्थस्स आलोए तं तु होइ अव्वत्तमिति तस्स चिति ) ये दोषा आलोचयितव्यास्तत्सेवी यो गुरुस्तस्य पुरतो यदालोचनं स तत्सेविलक्षणमालोचनादोषस्तत्र चाऽयमभिप्रायः आलोचयितुः ॥
जह एसो सत्तुल्लो, नो दाही गुरुगमेव पच्छित्तं॥
इय जो किलिट्ठचित्तो, दिएणा आलोयणा तेणाति ॥
भ. श. २५ उ. ७ । ध. अ.धे. २ । पं. चू. ॥
दस दोसविप्पमुक्कं, तम्हा सव्वं अगूहमाणेणं ।
किंपि कयमकज्जं, तं जहवत्तं कहेयव्वं ॥ ३२ ॥
द० प० ॥
आलोचनायामपरावत्तने दोषा ( ववहार ) शब्दे ॥
कथम्पुनरात्मनः शोधिजातमन्यालोचयेदित्याह ॥
जह बालो जंपतो, कज्जमकज्जं च उज्जयं भणति ।
तं तह आलोएज्जा, मायामयविप्पमुक्को उ ॥ ४७ ॥
व्याख्या । यथा यद्बालः शिशुर्जल्पन्भाषमाणः विवक्षितमिति गम्यते । कार्यमकार्यं वा विधेयमविधेयं वा निर्विशेषमृजुकं अवक्रमयन् गोपायन्नित्यर्थः। भणत्यभिधत्ते मायादिकं प्रतीतमित्यालोचनीयाऽपराधं तद्वा तद्बालवद्वक्तव्यमवक्तव्यं वाऽलोचयेत् गुरोर्निवेदयेत् । मायामदविप्रमुक्तस्तु शठता गर्वरहित एव मायामदयुक्तो हि न सम्यगालोचयितुं शक्नोतीत्यतस्तद्रहिते इत्युक्तम् । व्य० उ० ४ । १० । पंचा० वृ० १५
आलोचनाविधिः ॥
एत्थं पुण एसविही, अरिहो अरिहम्मि दलयति कमेण ।
आसेवणादिणा खलु, सम्मं दव्वादि सुद्धीए ॥ ८ ॥
व्याख्या । अत्रालोचनायां पुनः शब्दस्य चैवं संबंधो विधिनाऽलोचना देया । अत्र पुनः एषोऽयं वक्ष्यमाणो विधिः कल्पस्तद्यथा । अर्हे आलोचनादानोचितः । तथा अर्हे आलोचनादानयोग्ये गुरौ विषयभूते ( दलय इत्ति ) ददाति प्रयच्छति तया क्रमेणाऽनुपूर्व्येण किं विधेनेत्याह । आसेवनादिना खलु प्रतिपेवाप्रभृतिनैव आदिशब्दादालोचनाक्रमग्रहः । तथा सम्यग्यथावत् आकुट्टिकादिभावप्रकाशनतः ॥
तथा द्रव्यादिशुद्धौ द्रव्यक्षेत्रकालभावशुद्धौ सत्यां प्रशस्तेषु द्रव्यादिष्वित्यर्थः ॥
अथ सम्यगिति यदुक्तन्तत्राह ॥
तह आउट्टियदप्पओ, कप्पमायप्पलवजयणाए ॥
कज्जे वा जयणाए, जहट्ठियं सव्वमालोए ॥ १० ॥
व्याख्या । तथेति शब्दः समुच्चये । यथाक्रममालोचनाङ्गमेव माकुट्यादिकृतत्वमपीत्येतदर्थः । आकुट्टिकोपेत्यकरणं दर्पो वल्गनादिः । प्रमादो मद्यादिस्मृतिभ्रंशादिर्वा एषां द्वन्द्वोऽतस्तेभ्यस्तत आकुट्टिकादर्पप्रमादतस्तथा कल्पतो वा ऽशिवादिपुष्टालम्बनतो वा कल्पश्च यतनादिविषय इत्यत आह । यतनया यथाशक्तिसंयमरक्षारूपया कार्ये वा प्रयोजने वा संभ्रमहेतोः प्रदीपनकादावयतनयाऽनापेक्षितसारेतरविभाग तया यदासेवितं तदिति गम्यं यथास्थितं यथावृत्तं सर्वं समस्तमकृत्यमालोचयेत् । गुरुभ्यो निवेदयेच्छुद्धिकाम इति गाथार्थः ॥ १० ॥ पंचा० १५ वृ० ॥

( ३१ ) सम्यगाऽलोचनादाने किं लिङ्गम् ॥

सम्यगालोचनादाने किम्पुनर्लिङ्गमित्याह ॥ पंचा० वृ० १५
आलोयणासुदाणे, लिंगमिणे विंति मुणियसमयत्था ।
पच्छित्तकरणमुचितं, अहकरणयं चेव दोसाणं ॥ ४८ ॥
व्याख्या । आलोचनासु दाने सम्यगालोचनायां लिंगं चिन्हमिदं वक्ष्यमाणं ब्रुवते आहुः। मुणियसमयत्था ज्ञातसिद्धांतार्थाः प्रायश्चित्तकरणं विशुद्धिविशेषासेवनमुचितं योग्यं गुरूपदेशानुसारि तथा अकरणकमेवाविधानकमेव चैवेत्यवधारणे दोषाणामालोचितापराधानामिति गाथार्थः ॥
कथम्पुनरालोचनादानं शुद्धिकरणं भवतीत्याह ।
इयभावपहाणाणं, आणाए सुट्ठियाण होंति इमं ॥
गुणठाणसुद्धिजणगं, सेसं तु विवज्जय फलंति ॥४९॥
व्याख्या । इत्येवमुक्तनीत्या भावप्रधानानां संवेगसाराणां तथा आज्ञायामाप्तोपदेशे सुस्थितानां सुष्टु व्यवस्थितानां भवति स्यात् इदमालोचनादानं गुणस्थानशुद्धिजनकं प्रमत्तादिगुणविशेषनिर्मलताधायकं शेषं तूक्तादन्यदुक्तविपर्ययफलं गुणस्थानकाशुद्धिजनकमिति शब्दः समासाविति गाथार्थः ॥
तथाच महानिशीथे अ० १ ॥
खंता दंता विमुत्ता य, जिइंदी सच्चभासिणो ॥
छकायसमारंभाओ, विरत्ते तिविहेणओ ॥ ८९ ॥
तिदंडा सव्वसंवरिया, इत्थिकहासंगवज्जिया ॥
इत्थिसंलावविरया जीय, अंगोवंगनिरक्खणा ॥ ९० ॥
निम्ममत्ता सरीरेवि, अप्पडिवद्धा महायसा ॥
भीया इत्थिगब्भ,सहीणं बहुदुक्खाओजावओए ९१
तहातो परिसेण, भावेणं दायव्वा आलोयणा ॥
पच्छित्तं पिय कायव्वं, तहा जहा चेव एहिंकयं ॥९२॥
न पुणा तहा आलोएयव्वं, मायाडंभेण केणई ॥
जह आलोयणं चेव, संसारं वुड्ढीभवे ॥ ९३ ॥
अणंतणाइकालाओ, अत्तकम्मेहिं दुम्मइ ॥
बहुविकप्पकल्लोले, आलोए तेवी अहोगए ॥ ९४ ॥
गोयम ! केसिं विना माई, साहिमोतं निबोधय ॥
जेमालोयणपच्छित्ते, भावदोसिक्ककलुसिए ॥ ९५ ॥
ससल्ले घोरमहं दुक्खं, दुरहियासंसुद्धसहं ॥
अणुहवंति चिट्ठति, पावकम्मे नराहमे ॥ ९६ ॥
गुरुणा संजम नाम, साहू निद्दंद्दसे तहा ॥
दिट्ठिवायाकुसीले य, मणकुसीले तहेव य ॥ ९७॥
सुहुमालोयगे तहय, परवंचयसा लोयगे तह ॥

किं वा लोयगा तहयए, किंवा लोयगे तहा ॥ ए७ ॥
अकयालोयणे चेव, जणरंजवणे तहा ॥
नाहं काहामि पच्छित्तं, उम्मासा लोयणमेव य । एए ।
मायाकंजपवंचीय, पुरकमतववरणकहो ॥
पच्छित्तं मे किंचि, न कायालोयणुच्चरे ॥ १०० ॥
आसणालोयणक्खाई, लहुं पच्छित्तजायगो ॥
अम्हाणा लोइयं चेठे, मुहवंधालोयगे तहा ॥ १०१ ॥
गुरुपच्छित्ताहमसक्केय, गिलाणालंवणं कहे ॥
अणमालोयगे साहू, सुणासुणिण तहेव य ॥ १०२ ॥
निच्छिन्ने वियपच्छित्ते, न काहं सुद्धिसायगे ॥
रंजवणमेत्तलोगाणं, वाया पच्छित्ते तहा ॥ १०३ ॥
पमिवज्जणपच्छित्ते, चिरयालए वेसगे तहा ।
अणाणिट्ठियपायाच्छित्ते, अप्रजणियमहायरे तहा ।१०४।
आउट्टीयमहापावे, कंदप्पादप्पे तहा ।
अजयणासेवणे तहय, सया असुयपच्छित्ते तहा । १०५।
दिठ्ठयोच्छयपायच्छित्ते, सयं पच्छित्तकप्पगे ।
एव इयं इच्छयपच्छित्तं, पुव्वालोइयमणुस्सरे ।१०६
जाइमयसंकिए चेव, कुलमदसंकिए तहा ।
जाइकुलोजयमयासंके, सुत्तलाजिस्सिरि सकीयाए तंही ।७।
तवोमया संकिएचेव, पमिचासयसंकिए तहा ।
सक्कारमयलुध्दे य, गारवसंदूसिए तहा।१०७ ।
अपुज्जो वा विहंजमं, एगजंमेव चिंतगे ।
पाविणंपि पावतरे, सकलुसचित्तालोयगे ।१०ए।
परकहावगे चेव, अविणयालोयगे तहा ।
अदिहीयालोयगे साहू, एवमादी दुरप्पणो ।११०।
अणंतेणाइकालेणं, गोयमा ! अत्तदुक्खिया ।
अहो अहो जावसत्त, मियं जावदोसेक्क ओगए ।१११।
गोयम! णंते चिठ्ठंति, जे अस्सादिए ससाहिए ।
नियन्नासदोससल्लाणं, जुज्जंते विरसं फलं । ११२ ।
चिठ्ठइस्संति अज्जवि, तेणं सल्लेण साहिए ।
अणंतंपि अणागयं, काले तम्हा सल्लं न धारएसं मु
णित्ति ॥११३॥

( २२ ) कृतानां कर्मणां क्रमत आलोचना ॥
आलोचनाक्रमश्च ।

ते य पमिसेवणाए, अणुलोमा होंति वियमणाएय ।
पमिसेववियमणाए, एत्थ चउरो जवे जंगा ॥७१॥

तांश्चातिचारान्प्रतिसेवनानुलोमेन यथैव प्रतिसेवितास्तेनै-वानुक्रमेण कदाचिच्चिन्तयति। तथा ( वियमणाएत्ति ) विकटना आलोचना तस्य च अनुलोमा एव चिंतयति एतदुक्तम्भवति । पढमं लहुओ दोसो पमिसेविउ पुणोवठ्ठो वहुतरो चिंतेइ। एवमेव ततश्च प्रतिसेवनायां अनुकूलमालोचनायामपि अनुकूलमेव । यतः प्रथमं लघुको दोष आलोच्यते पुनर्वृहत्तरः पुनर्वृहत्तमः इति एष प्रथमो भंगकः । अन्नोपमिसेवणा अनुकूलो न उणवियमणा एतदुक्तंभवति ।

आसिवियं पढमं वड्डं पुणो लहुयं पुणोवड्डं ।
पुणो वड्डयरं चिंतेइ ॥

एवमेव ततश्च प्रतिसेवनायाः । अनुकूलं । अनुकूलं नत्वालोचनाया यतस्तत्र प्रथमं लघुरालोच्यत । पुनर्वृहत्तरः पुन र्वृहत्तमः इति एष द्वितीयो भंगः । " अन्नो पमिसेवणाएवि अणणुकूलो आलोयणाए पुण अणुकूलो,, । एतदुक्तं भवति । अठ्ठावियठ्ठापमिसेवणाएवि अणणुकूलो आलोयणाएवि अणणुकूलो । एतदुक्तम्भवति पढमं वड्डो पडिसेविओपुणो वड्डायरो वितेत्ति पुण जं जहा संभरइ पढमं वड्डो पुणो लहुओ पुणो वड्डो पुणो वहुयारो एवं अपमिवियइं चिंते तस्स ण पमिसेवणाणुकूलो यणाणुकूलो एस चउत्थो एसो वज्जेयव्वो॥

इदानीममुमेवार्थं गाथार्द्धेनोपसंहरन्नाह ।
( पमिसेववियमणा एय होइ इत्थपि चउभंगो ) इदं व्याख्यातमेवेति ॥ ओघ. ॥

तथा च पंचाशके वृ. १५ ॥

दुविहेण णुलोमेण, आसेवणवियमणानिहाणेणं ।
आसेवणाणुलोमं जं जह आसेवियं वियमे ॥ १६ ॥
आलोयणाणुलोमं, गुरुवराहे उपच्छओ वियमे ।
पणगादिणा कमेण, जहजह पच्छित्तवुड्ढि ॥ १७ ॥

व्याख्या । द्विविधेन द्विप्रकारेणानुलोम्येन क्रमेण दै विध्यमेवाह । आसेवना यदानुलोम्यं तदासेवनमेव विकटनेन च यत्ता द्विकटनमेवानस्ते एवाभिधाने यस्य तत्तथा तेनासेवन विकटनाभिधानेनालोचनां ददातीति द्वारगाथासंवधिपदं संवंधनीयं । तत्राद्यं स्वरूपत आह । आसेवनानुलोम्यमुक्त शद्धार्थं तदिति शेषः। यत्कि येन क्रमेणासेवितं यथा सिंचितं विकटयत्यालोचयत्यालोचनाकारीति । आलोचनानुलोम्यं पुन र्व्यक्तशब्दार्थं तद्यदिति शेषः । गुरुकापराधान्महातिचारान् तु शब्दः पुनरर्थः । स च योजित एव पच्छत्ति प्राकृतत्वात्पश्चाद्यथापराधानंतरं विकटयत्यालोचयति । कथमित्याह । पण गाइणत्ति । समयज्ञापत्वात्पंचकादिना पंचदशकप्रभृतिना क्रमेणानुपूर्व्या किमित्याह ।

यथा यथायेनयेन प्रकारेण प्रायश्चित्तवृद्धिर्विशुद्धिवर्द्धनं तथा-तथायद्विकटयतीति प्रक्तमिह च लघावचोरपंचकंनाम प्रायश्चित्तं गुरुके तु दशकं गुरुतरे तु पंचदशकमित्येवमादीति तुशब्दःपूरणार्थः । अत्र च गीतार्थ आलोचनानुलोम्येनैवालोचयति कारणं तु गीतार्थगम्यामितरस्त्वासेवनानुलोम्येनालोच ना तु लोम्यानभिज्ञत्वा त्तस्य च कारणमतिचाराणां सुस्सर त्वमिति गाथाद्वयार्थः ॥

संयतीनामालोचना । महानिशीथे अ० १ ॥

गोयम ! समणीणणोसंखा जा उनिकलुसनीसल्लवीसुमुझुनिम्मलव्रमणमाणसाउ अज्झप्पाविसोहीए आलोयत्ताणसुपरिपुन्नं । नीसकं निखिलं निरावं नियवं नियदुचारियमाईयं सव्वंपिन्नावसल्लं अहारिहं तवो कम्मं पायच्छित्तं मणुचरित्ताणं निध्दोपपावकम्ममलसेवकलंकाओ-उप्पन्नदिव्वपरकेवलनाणाओ महाणुन्नावाओ महाय । साओ महासत्तसंपन्नाओ सुगणाहियनामाधेयाओ अणंतमसोक्खं मोक्खं पत्ताओ ॥

कासिंच गोयमा नामे, पुन्ननागाए स हिमो ॥
जेसिमालोयमाणीणं, उप्पणंसमणीणकेवलं ॥ १॥
हाहाहापाकम्माणं, पावापावमतीअहं ॥
पावं गणं वि पावयए. हाहाहाउट्टिचिंतमे ॥ २ ॥
हाहा हाइच्छे जावं, मे ताविहजं मेववट्टियं ॥
तहावीणघोर वीरुगं, कट्टंतवमंजमं धरं ॥ ३ ॥
अणंतपावरासीओ, संमिलियाओ जयाचवे ॥
तइयाइच्छित्तणं लच्छे, शुच्छे पावाण कम्मणा ॥ ४ ॥
एगपिंमी कृताणं, समुद्दयंतणुतो तह ॥
करेमि जह न पुणो, इत्यीहं होमि केवली ॥ ५ ॥
दिट्ठीए वि न रूंभामि, सीलं हंसमाणि केवली ॥
हाहामणेणमे किंपि, अहदुट्ठचिंतियं । ६ ॥
तमालोइत्ताखहुं, सुच्छिगिएहहं समणिकेवली ॥
दिव्वूणमफलावएणं, रूवं कंतिदित्तिसिरिं ॥ ७ ॥
माणरपयं गाहमाजं तु, खपमणरूमाणीय केवली ॥
वातमोत्तूण नो अन्नो, निच्छयं मह तणुच्छिवे ॥ ८ ॥
छक्कायं समारंभं, न करेहंसमाणि केवली ॥
पोग्गलकरे कारुगुजा.तं णाहि जहणं तरे तहा । ए ।
जणाणा एवि ण दंशेमि, सुसंगुत्तं गोत्तं गासमणी य केवली ॥ बहुभवंतरकोमीओ, घोरं गब्भपरंपरं ॥ १०॥ परियट्टंतीए सुब्भच्छमे, णाणचारीत्तसंजुअं । माणुस्स जम्मं सुसंमत्तं, पावकम्म क्खयं करं ॥११॥ तासव्वजा वणीसव्वा, आलोएमी खणेखणे ॥ पायच्छित्तमणुट्ठामि, वीयंतं न समारजं ॥ १२ ॥ जेणागडइपाठित्तं, वायामणु साय कम्मुणा । पुढविदगागणिवाऊ, हरियकायं तहे वय ॥ १३ ॥ वीयकायसमारंभं, वितिं चउपंचिंदिया णया ॥ सुसाणंपि न भासेमि, समरक्खंपि अदिन्नयं ॥ १४ ॥ न गिएहंति मणंतवि, णपच्छे मणसावि मेहुणं ॥ परिगहं न काहामि, मूलुत्तरगुणरवलणं तहा ॥ १५ ॥ मयभयकसायदंमसु, गुत्तिसुमितिंदिएसु य । अठारसीलं गसहस्साहि छियठीतणू ॥ १६ ॥ सज्झायज्झाणयोगेसु, आभिरमं समणीकेवली ॥ तेलोकलक्खणक्खंभ धम्मातित्थंयकरेण जं ॥ १७ ॥ तमहंलिंगंधारेण, भाणिज्जइ विजंते निप्फिलियं ॥ मज्झोमझीय दोखंभा, फालिज्जामि तहेवय ॥१८ ॥ अहपाक्खिप्पामि दित्तग्गिं, अहवा छिजे जइसिरं ॥ तावीहं नियमवयभंगं, सीलं चारित्तखंमणं ॥ १९ ॥ मणसा वी एकजं, मकएण कुए समाणिकेवली ॥ खरुद्दगोणजाइसुं, सरागाहिंठिया अहं ॥ २० ॥ विकमं पि समायरियं, अणंते भवभवंतरे तमेव खरकम्ममह, पवज्जाए ट्टियाकुणं ॥ २१॥ घोरंध यारपायाला, जेणंणोणिहरं पुणो ॥ छंमियाणमाणुसं जंम्मं तवं च वहु दुक्ख भायणं ॥ २२ ॥ अणिच्चं खणविद्धंसी, बहुदंमं दोपसंकरं । तत्थावि इत्थीसंजाया, सयलत्तेलोकनिंदिया ॥ २३ ॥ तहावि पावियं धम्मं, णिविग्घमणं तराइयं । ताहं त नं विराहेमि, पावदोसेण केणई । २४ । सिंगाररागसविगारं, साहिलासं न विहिमो । पसंताए विदिठ्ठीण, मा तु धम्मोवएसगं ।२५। अन्नं पुरिसं न निज्का य,णालंवं समणिकेवली । तं तारिसं महापावं, कात्रो अकहणीय तं ।२६। सव्वमविउपन्नं जह, दत्तालोयसमणिकेवली । पमादि अणंतसमणी उ, दाउसुच्छीलोयणं । नीसल्लोकेवलं यप्प:,सिच्छा उ अणादीकालए गोयमा ! खंता दंता व मुत्ताउ जिइंदिया उ सव्वभाणिए उ । छकायसमारंभा विरया तिविहेण उ । तिदंमा सव्वसंवुमा पुरिसकहासंगवज्जिया पुरिससंलवविरया उ पुरिसंगोवंगनिरक्खणा निममत्ताउ सरीरे अप्पमिवद्धा उ महायसा भीयत्थिगब्भवसहीणं बहुदुक्खाओ भवसरणाओ तहा ताएरिसेणं भावेणं दायव्वा आलोयणा पायच्छित्तं पि कायव्वं ॥

तह जह एयाहिं समणिहिं कयं णतणं तह आलोएयव्वं । माय.भंजेण केणई जह आलोयमाणी णं पावकम्मवुड्ढिं भवे अणंतेणा इकालेणंमायाउं तत्थ कम्मदोसेणं कवमालोयपकाउसमणी उ सल्लीउ आतिउ गयस्सरेणं छवियं पुढविंग या । ३३ । छकासिंचगोयमा ! नामेसाहिमा तंति वोधयजाउ आलोयमाणि उ भावदोसेसु फुत्तरगपावकम्ममलपचालिया भवसंजमसीलगाणं णीसल्लतपसंसियं तं परमभावविसोहिए विणाखणच्छपि नाभवे तो गोयम ! केसिमीत्थियणं चित्तविसोहिं सुनिम्मलाभवंतारं विमो होही जेण नीसल्लयाभावे छट्ठट्ठमदसमदुवालसेहिं सुक्खंतिकेवि समणि उत हवि यसंरागभावं गाणालोयंतीणं च्छमंतिवहुविहवि कप्पकल्लोलमालाओ किलगाहणं वियरं तंतेण लक्खिवज्जा २५ दुखगाहमणसागरं ते कहमालोयणं दि तुं जासि चित्तं पि नोवसे सल्लंजो ताणमुच्छरए ।२६। स वंदणीओखणे खणे । असणेहि पीयपुल्वेणं धम्मसुच्छलसावियं । सीलंगगुणट्ठाणेसु उत्तमेसुं धरेइ जो । इ लीवहुंवंधणमुक्कगिहकलत्ता विचारगा । सुविसुच्छसुनिम्मलाचित्तं णीसल्लं सोमहायशो दढव्वो वंदणीओ य देविंदाणं सउत्तमो दीणत्थी सव्वपरिभूयं विरइट्ठाणे जो उत्तमे वरेणा लोएमि अहं समणी देक हं किंचि सा हुणि बहुदोसं न कहं समणी जं दिट्ठं समणिहिंतं कहं असावज्ज कहासमणि बहु आलंवणा कहा पमा ।

या खावगा समणिए पविट्ठा वल्लमाओ कहा लोगविरुद्ध-कहा तह य परवएसा लोयणीसुयपच्छित्ता तहया जायादीमयसंकिया । सूसगारवसीलया चेव गारवत्ति-पदूसिया तहा । एवमादि अणेगनवादोसवसछेहिं पूरि-यानिरंतरा अणतेणं कालसमएणं गोयमा ! अइकंतेणं अणंताउ समणीओ बहुरवावसहंगया गोयमा ! अणं ताउ चिट्ठंति जाअणादी सल्लसल्लीया । नावदोसे कसे-छेहिं भुजमाणीओ कटुविरसं घोर गतरं फलं चिट्ठइस्सं-ति अज्जावि तेहि सल्लेहिं सल्लिया अणंतं पि अणागयं कालं तम्हा सल्लं सुसुहुमंपि समणी णो धारेज्ज रवणं त्तिवेमि

(२३) आलोचनायां दत्तायां न विरतिभंगः सदृष्टान्तः ॥

आलोचनायां दत्तायामपि विरतिभंगो न करणीयः । महानिशीथे । अ. ७ ॥

पाणाइवाय विरइ, सेवफलया गिएहिऊण ताथीमं मरणावयं मिपत्ते मरेज्जाविरइ न खंभेज्जा १ अलियवणस्स विरइ, सावज्जं सव्वमवि न नासिज्जा परदव्वहरण विरई, करेज्ज दिन्ने वि मालोयं २ घरणं दुद्धरवं नव्वयस्सकाउं परिग्गहवायं ॥ राइभोयणविरइ, पंचिंदियनिग्गहं विहिणा ३ अन्ने य कोह माणा, एग दोसे य आलोयणं दाउं । पमाहारअहंकारे, गायहे सव्वं पव्वतणे । जह तव संजमसज्जा यम, गाणमाइसु-सुद्धिं नावेहिं उज्जमियव्वं गोयम ! विज्जुलयाचंच ले जीवे किं बहुणा गोयमा ! इत्थं दाऊणं पुढविकायं विराहिज्जा कत्थगंतुं समुज्जिहीं किं बहुणा गोयमा ! इत्थं दोऊणं आलोयणं वाहिणंपाणिं तहिं जम्मे जो पिए-कत्थ । चउमुजिही किं बहुणा गोयमा ! एत्थं दाउणं आलोयणं उन्हववइ जालय जाइ फुसिऊत्ता कत्यसुज्झिही किं बहुणा गोयमा ! इत्थं दाऊण आलोयणं वाउकायं उदिरिज्जा कत्थगंतु ससुझिहि किं बहुणा णं गोय-मा! एत्थम्दाउणम् आलोयण जोहरियतणं कप्पांवाफरिसे कत्थमसु झिहि किं बहुणा गोयमा ! इत्थं दाऊणं आलोयणं अक्कमइ बीजकायं जो कत्थगंतो समुज्झिही किं बहुणा गोयमा ! इत्थं दाऊणं आलोयं वियलं दीवीति चउपंचि-दियपरिठावे जो कत्थ समुत्थही किं बहुणा गोयमा इत्थं दाऊणं आलोयणं छकाए जो तं न रक्खेज्जा । सुहुमे कत्थसमुच्छिही किं बहुणा गोयमा ! इत्थं दाऊणं आलोयणं तसथावरो जो न रक्खे कत्थगंतु समुच्छिही थालोइयनींदियगरहियओविकयपायच्छित्त निसल्लो उत्तम ठाणंमि ठिउपुढवारंभं परिहरिज्जा । आलोइयनिंदियगर-हियविकयपायच्छित्तनीसल्लो उत्तमठाणंमि ठिओ-जोइ ए मा फुसावेज्जा । आलोइयनिंदियगरहिओविकयपायच्छित्तसंविग्गो उत्तमठाणंमि ठिओमाविराहिज्जा अत्ताणं आलोइयनिंदियगरहिउगकयपायच्छित्तसंविग्गेच्छिन्नं पि तणं हरियं असइमणगं मा फरिसे आलोइयनिंदियगरहियो विकयपायच्छित्तं संविग्गो उत्तमठाणंमि ठिउ जाव-ज्जीवं एतेसिं बेइंदियतेंदियचउरो पंचिंदियाणं जीवाणं संघट्टणपरियावण किलावणोदवणमाकासी आलोइयनिंदियगरहिओविकयपायच्छित्तसंविग्गो उत्तमठाणंमि ठिओ सावज्जं मानाणिज्जा आलोइयनिंदियगरहिओ विकयपायच्छित्तसंविग्गो लोयतेण विन्नूई गाहियागहिओ खिवि उदिन्ना आलोइयानिंदियगरहिओ विकयपायच्छित्तनिजो-सल्लोजोइत्थि संलोविज्जा गोयमा ! कत्थमुज्जिहिआलोइय निंदियगरहियओविकयंपायच्छित्तसंविग्गोंचउद्दसधम्ममुवगरणे उट्टमापरिहगं कुज्जा तेसुंपि वि ममतो अमुच्छिओ अगढिओ दढंहविया अहवा कुज्जाउ ममत्तं तासुद्धी गोयमा ! नत्थि किं बहुणा गोयमा ! नत्थइत्थंदाउणं आलोयणं रयाणिए आविए पाणक्कत्थगम् तु समुज्झिही आलोइयनिंदियगरहिओ विकयपायच्छित्तनीसल्लो छइ-कम्मेणरक्खे जो कत्थलुद्धि लभेज्ज से । महा. अ. ७ ॥

आलोचनायां दत्तायां विरतिभङ्गो न करणीयस्तथा उपचारात्तत्कारणभूतप्रमादक्रियायाञ्च । ध. २ अ. ।

आलोचनायाः प्रायश्चित्तस्य प्रशस्तयोगसङ्ग्रहनिमित्तत्वात्तदात्मके प्रथमे योगसङ्ग्रहे, च । " प्रशस्तयोगसङ्ग्रहनिमित्तत्वादालोचनादय एव तथोच्यन्ते ,, सम. ३१ स. । मोक्षसाधनयोगसंङ्ग्रहाय शिष्येणाऽऽचार्याया लोचनं दत्तेति । अत्रोदाहरणम् ।

उज्जेणि अट्टणे खलु, सिंहगिरि सोपारए पुह हवई ।
मच्छिअमल्ले फुरुल्ल, क्खविओ फलिहमल्ले अ ॥ १ ॥

फुरुल्लखनिया ग्रामाः फलहीशब्दो देश्यो वतणीवाची ।

उज्जयिन्यामुज्जयिन्यां, समस्तनगरावलीः ।
जितशत्रुर्नृपस्तत्र, मल्लस्तस्याट्टनाभिधः ॥ १ ॥ इत्यादि,
( अट्टन ) शब्दे तत्कथा ।

यथाट्टनस्तथाचार्य्यः, पताकानिर्वृत्तिः पुनः ।
साधुर्मल्लोऽपराधास्तु, प्रहारास्तान् गुरोर्हि यः १०
आलोचयति निः शल्य, स निर्वाणपताकिकां ११
त्रैलोक्यरंगे गृएहाती, त्युक्ताः शिप्यगुण इमे ।
आव. क. । आ. चू. । आव. ॥

( २४ ) आलोचनायामकृतायां मृत्वाऽनाराधको भवति ।

भिक्खू य अणयरं अकिच्चट्ठाणं पडिसेवित्ता सेणं तस्स ठाणस्स अणालोइयपडिक्कंते कालं करेइ । णत्थि तस्स

पोपितुं शीलं येषां ते पुत्रपोपिण उपलक्षणार्थत्वादस्य सर्वादेशकारिण एके केचन मोहोदये वर्तमानाः स्त्रीणां निदेशवर्तिनोऽपहस्तितैहिकामुष्मिकापाया उष्ट्रा इव परवशा भारवाहा भवन्तीति ॥ १६ ॥

किंचान्यत् ॥

राओ वि उडिया संता, दारगं च संठवंति धाई वा ।
सुहिरामणा वि ते संता, वत्थधोवा हवंति हंसा वा ॥१७॥

रात्रावप्युत्थिताः सन्तो रुदन्तं दारकं धात्रीवत् संस्थापयन्त्यनेकप्रकारैरुल्लापैः । तद्यथा ॥ " सामि उसणीगरस्स–णयकरस्स य हत्थकप्पगिरिपट्टणसीहपुरस्स चउणयस्स भिन्नस्स य कुच्छिउपुरस्स य कणकुज्जआयामुहसोरियपुरस्स य " इत्येवमादिभिरसंबद्धैः क्रीडनकउल्लापैः स्त्रीचित्तानुवर्तिनः पुरुषास्तत्कुर्वन्ति येनोपहास्यतां सर्वस्य व्रजन्ति सुष्ठु न्हीर्लज्जा तस्यां मनोऽन्तःकरणं येषां ते सुन्हीमनसो लज्जालवोऽपि ते सन्तो विहाय लज्जां स्त्रीवचनात्सर्वजघन्यान्यपि कर्माणि कुर्वते तान्येव सूत्रावयवेन दर्शयति । वस्त्रधावका वस्त्रप्रक्षालका हंसा इव रजका इव भवन्ति अस्य चोपलक्षणार्थत्वादन्यदपि उदकवाहनादिकं कुर्वन्ति ॥ १७ ॥

किमेतत् केचन कुर्वन्तीति येनैवमभिधीयते ।

वाढं कुर्वन्तीत्याह ॥

एवं बहुहिकए पुव्वं, भोगत्थाए जो भियावन्ना ॥
दासेमिव पेसे वा, पसुभूतेव सेए वा केई ॥ १८ ॥

एवमिति पूर्वोक्तं स्त्रीणामादेशकारणं पुत्रपोपणवस्त्रधावनादिकं तद्बहुभिः संसाराभिष्वङ्गिभिः पूर्वं तथापरे कुर्वन्ति करिष्यन्ति च ये भोगकृते कामभोगार्थमैहिकामुष्मिकापायमपर्यालोच्याभिमुख्येन भोगानुकूल्येनापन्ना व्यवस्थिताः सावद्यानुष्ठानेषु प्रतिपन्ना इति यावत् । तथा यो रागान्धः स्त्रीवशीकृतः स दासवदशङ्किताभिस्ताभिः प्रत्यपरेऽपि कर्मणि नियोज्यते । तथा वागुरापतितपरवशो मृग इव धार्यते नात्मवशो भोजनादिक्रियाऽपि कर्तुं लभते । तथा प्रेष्य इव कर्मकर इव क्रीत इव वर्चःशोधनादावपि नियोज्यते । तथा कर्तव्याकर्तव्यविवेकरहिततया हिताहितप्राप्तिपरिहारशून्यत्वात् पशुभूत इव यथाहि पशुराहारभयमैथुनपरिग्रहाभिज्ञ एवं केवलमसावपि सदनुष्ठानरहितत्वात्पशुकल्पः । यदि वा स स्त्रीवशगो दासमृगप्रेष्यपशुभ्यो ष्यधमत्वान्न कश्चित्, एतदुक्तं भवति सर्वाधमत्वात्तस्य तत्तुल्यं नास्त्येव येनासावुपमीयेत । अथवा न स कश्चिदित्युभयभ्रष्टत्वात् । तथाहि न तावत्प्रव्रजितोऽसौ सदनुष्ठानरहितत्वान्नापि गृहस्थस्ताम्बूलादिपरिभोगरहितत्वाल्लोचिकामात्रधारित्वाच्च । यदि वा ऐहिकामुष्मिकानुष्ठायिनां मध्ये न कश्चिदिति ॥१८॥

सांप्रतमुपसंहारद्वारेण स्त्रीसङ्गपरिहारमाह ॥

एवं खु तासु विन्नप्पं, संथवं संवासं च वज्जेज्जा ।
तज्जातिआइ मे कामा, वज्जकरा य एवमक्खाए ॥१९॥

एतत्पूर्वोक्तं खु शब्दो वाक्यालंकारे तासु यत्स्थितं तासां वा स्त्रीणां संबन्धि यद्विज्ञप्तमुक्तं । तद्यथा । यदि सकेशया सह न रमसे ततोऽहं केशानप्यपनयामि इत्येवमादिकम् । तथा स्त्रीभिः सार्धं संस्तवं परिचयं तत्संवासं च स्त्रीभिः सहैकत्र निवासं चात्महितमनुवर्तमानः सर्वापायभीरुस्त्यजेज्जह्यात् । यतस्ताभ्यो जातिरुत्पत्तिर्येषां ते कामास्तज्जातिकामा रमणीसंपर्कोत्थास्तथाऽवद्यं पापं वज्रं वा गुरुत्वादधःपातकत्वेन पापमेव तत्करणशीला अवद्यकरा वज्रकरा वेत्येवमाख्यातास्तीर्थकरगणधरादिभिः प्रतिपादिता इति ॥ १९ ॥

सर्वोपसंहारार्थमाह ॥

एवं भयं ए से याय इइ, से अप्पगं निरुंभित्ता ।
णो इत्थिणो पसुभिक्खुणो सयं पाणिणा णन्नज्जेज्जा ॥२०॥

एवमनन्तरनीत्या भयहेतुत्वात्स्त्रीभिर्विज्ञप्तं तथा संस्तवस्तत्संवासश्च भयमित्यतः स्त्रीभिःसार्धं संपर्को न श्रेयसे असदनुष्ठानहेतुत्वाच्चस्येत्येवं परिज्ञाय स भिक्षुरवगतकामभोगविपाक आत्मानं स्त्रीसंपर्कान्निरुध्य सन्मार्गेप्यवस्थाप्य यत्कुर्यात्तद्दर्शयति । न स्त्रियं नरकवीथिप्रायां नापि पशुं लीयेताश्रयेत स्त्रीपशुभ्यां सह संवासं परित्यजेत् । " स्त्रीपशुपण्डकवर्जिता शय्येति" वचनात्तथा स्वकीयेन पाणिना हस्तेनावाच्यस्य ( ण लिज्जेज्जाति ) न संवाधनं कुर्यात् । यतस्तदपि हस्तसंवाधनं चारित्रं शवलीकरोति । यदि वा स्त्रीपश्वादिकं स्वेन पणिना न स्पृशेदिति । २० । अपिच ।

सुविसुद्ध लेसे मेहावी, परकिरिअं च वज्जए नाणी ॥
मणसा वयसा काएण, सव्वफाससहे अणगारे ॥ २१ ॥

सुष्ठु विशेषेण शुद्धा स्त्रीसंपर्कपरिसंहाररूपतया निष्कलङ्का लेश्यान्तः करणवृत्तिर्यस्य स तथा स एवंभूतो मेधावी मर्यादावर्ती परस्मै स्त्र्यादिपदार्थाय क्रिया परक्रिया तां च ज्ञानी विदितवेद्यो वर्जयेत्परिहरेत् । एतदुक्तं भवति । विषयोपभोगोपाधिना नान्यस्य किमपि कुर्यात् नाप्यात्मनः स्त्रिया पादधावनादिकमपि कारयेत् । एतच्च परक्रियावर्जनं मनसा वचसा कायेन वर्जयेत्तथा औदारिककामभोगार्थं मनसा न गच्छति नान्यं गमयति गच्छन्तमपरं नानुजानीते एवं वाचा कायेन च सर्वेप्यौदारिके नव भेदा एवं दिव्ये ऽपि नव भेदास्ततश्चाष्टादशभेदभिन्नमपि ब्रह्म विभृयात् । यथाच स्त्री स्पर्शपरिषहः सोढव्य एवं सर्वानपि शीतोष्णदंशमशकतृणादिस्पर्शानपि सहेत । एवं च सर्वस्पर्शसहोऽनगारः साधुर्भवतीति ॥ २१ ।

क एवमाहेति दर्शयति ।

इच्चेव माहु से वीरे, धुअरए धुअमोहे से भिक्खू ।
तम्हा अज्झत्थ विसुद्धे, सुविमुक्के आमोक्खाएपरिव्वएज्जा. सि ।

( पाठान्तरं विहरे आमुक्खाए त्तिवेमि ) इच्चेवमाहुरित्यादि ( इत्येवं यत्पूर्वमुक्तं तत्सर्वं स वीरो भगवानुत्पन्नदिव्यज्ञानः परहितैकरत आह उक्तवान् । यत एवमतो धूतमपनीतं रजः स्त्रीसंपर्कादिकृतं कर्म येन स धूतरजाः । तथा धूतो मोहो रागद्वेषरूपो येन स तथा । पाठान्तरं वा धूतोऽपनीतो रागमार्गो रागपन्था यस्मिन् स्त्रीसंस्तवादिपरिहारात्तत्तथा तत्सर्वं भगवान् वीर एवाह । यत एवं तस्मात्स भिक्षुरध्यात्मविशुद्धः सुविशुद्धान्तःकरणः सुष्ठु रागद्वेषात्मकेन स्त्रीसंपर्केण मुक्तः सन्नामोक्षायाशेषकर्मक्षयं यावत् परि समन्तात्संयमेऽनुष्ठाने व्रजेद्गच्छेत्संयमोद्योगवान् भवेदिति ॥ सूत्र० ॥ १ श्रु० ४ अ० ।

( १० ) स्त्रीस्वरूपस्य स्त्रीचरित्रस्य चातिनिन्दनीयत्वम् ।

तत्र स्वरूपनिन्दा यथा—

हा असुइसमुप्पन्निया, निग्गया जेण चेव दारेणं ।
सत्ता मोहपसत्था, रमंति तत्थेव असुइदारम्मि ॥ ३ ॥

हा इति खेदे अशुचिसमुत्पन्ना अपवित्रोत्पन्ना येनैव द्वारेण निर्गताः चशब्दाद्योगत्वमापन्नाः सत्वा जीवाः मोहप्रसक्ता विषमरक्ताः रमन्ते क्रीडयन्ति । तत्रैवाशुचिद्वारे भेदोक्ते—

समुद्रप्रभूतकुमारवदिति। एवं शरीराशुचित्वे सति शिष्यः प्रश्नयति।

किह ताव घरकुडीरी, कइसहस्सेहिँ अपरितंतेहिँ।
वन्निज्जइ असुइबिलं, जघणं ति सकज्जमूढेहिँ ॥ ४ ॥

हे पुज्याः ! कथं तावद् गृहकुड्याः स्त्रीदेहस्येत्यर्थः अपरितः तैरश्रान्तैः परिश्रमगणकैः स्वकार्यमूढैः स्वस्वार्थमौढ्यगतैः कविसहस्रैः ( जघणंति ) स्त्रीकट्यग्रभागं जघनरूपमित्यर्थः वर्ण्यते वचनविस्तारेण विस्तार्यते। किंभूतं जघनम् अशुचिबिलं परमापवित्रविवरम् उक्तं च " चर्मखण्डं सदाभिन्नमपानोद्गारवासितम्। तत्र मूढाः क्षयं यान्ति प्राणैरपि धनैरपि" ॥ ४ ॥ (तत्र प्राणैः शाक्यादयः क्षयङ्गताः धनैर्धम्मिल्लादय इति )

रागेण न जाणंति, वराया कलमलस्स निद्धमणं।
ताणं परिणंदंती, फुल्लं नीलुप्पलवणं च ॥ ५ ॥

हे शिष्य ! तीव्रकामरागेण न जानन्ति हृदये, च शब्दादन्येषां न कथयन्ति वराकास्तपस्विनः कलमलस्यापवित्रमलस्य निर्द्धमनं खालु इति ( ताणंति ) णं वाक्यालङ्कारे तज्जघनं (परिणंदंतीत्ति ) परमप्रियतयामत्वा वर्णयन्ति कथं वक्त्वार इवार्थे इव उत्प्रेक्षते फुल्लं प्रफुल्लं विकासितमित्यर्थः नीलोत्पलवनमिन्दीवरकाननम् ॥ ५ ॥

कित्तियमित्तं वन्ने, अमिज्जमइयंमि वच्चसंघारो।
रागो हु न कायव्वो, विरागमूले सरीरम्मि ॥ ६ ॥

कियन्मात्रं कियत्प्रमाणं ( वन्नेत्ति ) वर्णयामि शरीरे वपुषि हु यस्मादेवं तस्माद्रागो न कर्त्तव्यः। स्थूलभद्रवज्जस्वामिजम्बूस्वाम्यादिवत्। किंभूते अमेध्यं प्रचुरमस्मिन्निति अमेध्यमये गूथात्मके इत्यर्थः। वर्चस्कसंघाते परमापवित्रविष्ठासमूहे ( विरागमूलेत्ति ) विशिष्टो रागो विरागः मनोज्ञराग इत्यर्थः। तस्य मूलं कारणं कामासक्तानामङ्गारवतीरूपदर्शने चण्डप्रद्योतस्येव। यद्वा विगतो रागो मन्मथभावो यस्मात्स विरागो वैराग्यमित्यर्थः तस्य मूलं कारणं कामश्रेष्ठेरिव तस्मिन्विरागमूले ॥ ६ ॥

किमिकुलसयसंकिण्णे, असुइयमचुक्खे असासयमसारे।
सेयमलपुव्वडम्मी, निव्वेयं वच्चह सरीरे ॥ ७ ॥

कृमिकुलशतसंकीर्णे ( असुइयमचुक्खत्ति ) अशुचिके अपवित्रमलव्याप्ते ( अचुक्खे ) अशुद्धे सर्वथा धौतुमशक्यत्वात्। अशाश्वते क्षणं २ प्रतिविनश्वरत्वात्। असारे सारवर्जिते ( सेयमलपुव्वडम्मित्ति ) दुर्गन्धिस्वेदमलचिगचिगायमाने एवंविधे शरीरे जीवा यूयं निर्वेदवैराग्यं व्रजत गच्छत विक्रमयशोनृपस्येवेति ॥ ७ ॥

दंतमलकन्नगूहग, सिंहाणमले य लालमलबहुले।
एयारिसवीभत्थे, दुगुंछणिज्जम्मि कोरागो ॥ ८ ॥

दन्तमल-कर्णमल-गूथकसिंघाणमले चशब्दः शरीरगतानेकमलग्रहणसूचनार्थः। लालामलबहुले एतादृशबीभत्से जुगुप्सनीये सर्वथा निन्द्ये वपुषि को रागः ॥

को सडणपडणविकिरण-विद्धंसणचयणमरणधम्मम्मि
देहम्मी अहिलास, कुहियकढणकट्ठभूयम्मि ॥ ८ ॥

देहे शरीरे कोऽभिलाषो वाञ्छा किंभूते शटनपतनविकिरणविध्वंसनच्यवनमरणधर्मे। तत्र शटनं कुष्ठादिनाङ्गुल्यादेः पतनं बाह्वादेः खड्गच्छेदादिना विकिरणत्वं विनश्वरत्वं, विध्वंसनं रोगज्वरादिना जर्जरीकरणम्, च्यवनं हस्तपादादेर्देशक्षयः मरणं सर्वथा क्षयः। पुनः किंभूते कुथितकठिनकाष्ठभूते। विनष्टकर्कशदारुतुल्ये ॥ ८ ॥

कागसुणगाणभक्खे, किमिकुलभत्ते य वाहिभत्ते य।
देहम्मि मच्छभत्ते, सुसाणभत्तम्मि को रागो ॥ १० ॥

देहे को रागः। किंभूते काकश्वानयोः घूकारीभपणयोर्भक्ष्ये खाद्ये कृमिकुलभक्ते च व्याधिभक्ते च मत्स्यभक्ते स्मशानभक्ते च ॥ १० ॥

असुई अमिज्झपुन्नं, कुणिमकलेवरकुडियपरिसवंति।
आगंतुयसंठवियं, नवछिड्डमसासयं जाणे ॥ ११ ॥

अशुचि सदाऽविशुद्धममेध्यपूर्णं विष्ठाभृतम् ( कुणिमकलेवरकुडीति ) मांसशरीरहड्डयोर्गृहम् ( परिसवंतीत्ति ) परिस्रवत् सर्वतो गलत् आगन्तुकसंस्थापितं मातापित्रोः शोणितशुक्रपुद्गलैर्निष्पादितं नवछिद्रं नवरन्ध्रोपेतम्। अशाश्वतमस्थिरम्। एवंविधं वपुस्त्वं जानीहीति ॥ ११ ॥

पिच्छसि मुहं सतिलयं, सविसेसं राएण अहरेणं ॥
सकडक्खं सवियारं, तरलच्छिं जुव्वणत्थीए ॥ १२ ॥

( जुव्वणत्थीपत्ति )यौवनस्त्रियास्तरुण्या मुखं तुण्डं नरकतुण्डं साधुसंयमनृपविषखण्डं त्वं पश्यसि नन्दिषेणशिष्याईत्कस्थूलभद्रसतीर्थ्यवत् किंभूतं सतिलकं सपुण्ड्रम् सविशेषं कुङ्कुमकज्जलादिविशेषसहितं केन सह रागेण ताम्बूलादिरागवता अधरेणोष्ठेन सह सकटाक्षमर्द्धवीक्षणसहितम् सविकारं भ्रूक्षेपसहितं यथा तपस्विनामपि मन्मथविकारजनकं तरले चपले काकलोचनवत् अक्षिणी यत्र तत्तरलाक्षि इति

पिच्छसि बाहिरमट्ठं, न पिच्छसी उज्जरं कलिमलस्स।
मोहेण न चयतो, सीसघडिकं जियं पियासि ॥ १३ ॥

एवं त्वं बहिर्मृष्टं बाह्यभोगे मण्डितं पश्यसि सरागदृष्ट्या विलोकयसि न पश्यसि अन्धवत् विलोकयसि ( उज्जरंति ) मध्यगतं कुर्वेणं कुर्वन् ( सीसघडी कांजियपियसित्ति ) मस्तकघटीरसमपवित्रं पिबसि पानं करोषि चुम्बनादिप्रकारेणेति ॥ १३ ॥

सीसघडी निग्गालं, जं निट्ठहसी दुगुंछसी जं च।
तं चेव रागरत्तो, मूढो अइमुच्छिओ पियसि ॥ १४ ॥

मस्तकोद्भवापवित्ररसं यन्निष्ठे नयसि थूत्कृतयसि जुगुप्ससे कुत्सां करोषीत्यर्थः। यच्च त्वं तदेवरागरक्तो विषयासक्तो मूढो महामोहं गतः अतिमूर्च्छितः तीव्रगृद्धिं गतः पिबसि ॥ १४ ॥

पूइयसीसकवालं, पूइयनासं च पूइदेहं च।
पूइयछिद्दविछिद्दं पूइयचम्मेण यं पिणद्धं ॥ १५ ॥

पूतिकशीर्षकपालं दुर्गन्धिमस्तककर्परं पूतिकनासमपवित्रनासिकं पूतिदेहं दुर्गन्धिगात्रं पूतिकछिद्रविछिद्रम् अपवित्रलघुविवरबृहद्विवरं पूतिकचर्मणा अशुभाजिनेन पिनद्धं नियन्त्रितम् ॥ १५ ॥

अंजणगुणसुविसुद्धं, न्हाणुव्वट्टणगुणेहि सुकुमालं।
पुप्फुम्मीसियकेसं, जणई बालस्स तं रागं ॥ १६ ॥

अञ्जनगुणसुविशुद्धं तत्राञ्जनं लोचनकज्जलं गुणा नारकगोफणकराखाभिकादयस्तैः सुष्ठु विशुद्धमत्यर्थशोभायमानं

स्नानोद्वर्त्तनगुणैः सुकुमारम् । तत्र स्नानमनेकधा कालन मुद्वर्त्तनं पिष्टिकादिना मन्त्रोच्चारणं गुणा धूपनादिप्रकाराः यद्वा स्नानोद्वर्त्तनाभ्यां गुणास्तैर्मृदुत्वं गतं पुष्पमिश्रितं केशमनेककुसुमवासितकुन्तलमेवंविधं तन्मुखं मस्तकं शरीरं वा बालस्य मन्मथकर्कशबाणविद्धत्वेन सदसद्विवेकविकलस्य जनयति उत्पादयति रागं मन्मथपारवश्यं येन गुर्वादिकमपि न गणयति नन्दिसेणापाढभूतिमुन्यादिवत् ॥ १६ ॥

जं सीसपूरओ त्ति य, पुप्फाइँ भणंति मंदविन्नाणा।
पुप्फाइं चिय ताइं, सीसस्स य पूरयं सुणह ॥ १७ ॥

मन्दविज्ञाना मन्मथग्रहग्रथिलीकृताः ( जंति ) यानि पुष्पाणि कुसुमानि शीर्षपूरको मस्तकाभरणमिति भणन्ति कथयन्ति पुष्पाण्येव तानि शीर्षस्य पूरकं शृणुत यूयमिति ॥

मेओवसायरसिया, खेले सिंघाणए य छुभए यं ।
अह सीसपूरओ भे, नियगसरीरम्मि साहीणो ॥१८॥

मेदोऽस्थिकृत् वसावस्रसा चशब्दोऽनेकशरीरान्तर्गतावयवग्रहणार्थः । रसिका व्रणाद्युत्पन्नाः ( खेलेत्ति ) कण्ठमुखश्लेष्मा ( सिंघाणेत्ति ) नासिकाश्लेष्मा ( एयंति ) वर्चस्कमेतन्मेदादिकं ( छुभएयं ) क्षपध्वं मस्तके प्रक्षेपयत । अथ शीर्षपूरको ( भे ) भवतां निजकशरीरे स्वाधीनः स्वायत्तो वर्त्तते।१८।

सा किर दुप्परिपूरा, वच्चकुडी दुप्पया नवच्छिद्दा ।
उक्कडगंधविलित्ता, बालजणो अइमुच्छियं गिद्धो ॥१९॥

सा वर्चस्ककुटी विष्ठाकुटीरिका ( किरत्ति ) निश्चये दुष्पतिपूरा पुरयितुमशक्येत्यर्थः । किंभूता द्विपदा नवच्छिद्रा उत्कटगन्धविलिप्ता तीव्रदुर्गन्धव्याप्ता एवंविधा शरीरकुटी वर्त्तते । तां च बालजनो मूर्खलोकः अतिमूर्च्छितं यथा स्यात्तथा गृद्धो लम्पटत्वं गतः ॥ १९ ॥

कथं गृद्ध इत्याह—

जं पेमरागरत्तो, अवयासेऊण गूढमुत्तोलिं ।
दंतमलचिक्कणंगं, सीसघडिकंजियं पियासि ॥ २० ॥

यस्मात्प्रेमरागरक्तः कामरागग्रथिलीकृतो लोकः ( अवयासेऊणत्ति ) अवकाश्य प्रकाश्य प्रकटीकृत्येत्यर्थः ( गूढमुत्तोलिंति ) अपवित्रं रामाङ्गं पुंश्चिह्नं वा जुगुप्सनीयं दन्तानां मलः पिप्पिका दन्तमलस्तेन सह चिक्कणाङ्गं चिगचिगायमानमङ्गं शरीरमालिङ्ग्य च शीर्षघटीकाञ्जिकं कपालकर्परखट्टरसं चुम्बनादिप्रकारेण (पियसीत्ति) पिबसि अतृप्तवत् घुण्टयस्यतः ॥ २० ॥

दंतमुसलेसु गहणं, गयाणमंसे य ससयमीयाणं ।
वालेसु य चमरीणं, चम्मनहे दीवियाणं च ॥ २१ ॥

गजानां दन्तमुसलेषु ( गहणंतीति ) ग्रहणमादानं लोकानां वर्त्तते । मांसे चशब्दाद्वसाशृङ्गादौ शशकमृगाणां ग्रहणं वर्त्तते। चमरीणां वालेषु ग्रहणं द्वीपिकानां चित्रकव्याघ्रादीनां चर्म्मनखे ग्रहणं चशब्दादनेकतिरश्चामनेकावयवग्रहणं वर्त्तते । को भावः यथा गजादीनां तिरश्चां दन्तादिकं सर्वेषां भोगाय भवति तथा मनुष्यावयवो न भोगाय भवति पश्चादतः कथ्यतेऽनेनादौ जिनधर्मो विधेय इति ॥ २१ ॥

पूइयकाए य इहं, चवणमुहे निच्चकालवीसत्थो ॥
आइक्खसु सब्भावं, किम्हिसि गिद्धो तुमं मूढ ॥२२॥

इह पूतिककाये अपवित्रवपुषि च्यवनमुखे मरणसन्मुखे नित्यकालविश्वस्तः सदा विश्वासं गतः ( आइक्खसुत्ति ) आख्याहि कथय सद्भावं हार्दं (किम्हिसित्ति) कस्मादऽसि गृद्धस्त्वं मूढो मूर्खः यद्वा हे मूर्ख यद्वा हे मूढ ब्रह्मदत्तदशमुखादिवत्।२२।

दंता वि अकज्जकरा, वाला वि विवड्ढमाणबीभत्था ।
चम्मं पि य बीभत्थं, भण किं तसितं गओ रागं ॥२३॥

दन्ता अपि अकार्यकरा वाला अपि विवर्द्धमानाः सर्पवत् बीभत्सा भयंकराः चर्म्मापि च बीभत्सं भण कथय किं ( तसित्ति ) तस्मिन् शरीरे ( तमित्ति ) त्वं रागं गतः ॥२३॥

सिंभे पित्ते मुत्ते, गूहम्मि य वसाइ दंतकुंडीसु ।
भणसु किमत्थं तुज्झं, असुइम्मि वि वड्ढिओ रागो ॥२४॥

( सिंभेत्ति ) कफे पित्तमायुपि मूत्रे प्रस्रवणे गूथे विष्ठायां ( वसाइत्ति ) वसायाः ( दन्तकुंडीसुत्ति ) दृङ्गाजने यद्वा मकारोऽलाक्षणिकः दन्तकुड्यां यद्वा (दंतकुडीसुत्ति) दंष्ट्रासु भण कथय किमर्थं तवाशुचावपि वर्द्धितो रागः ॥२४॥

जंघट्ठियासु ऊरू, पइट्ठिया तट्ठिया कडीपिट्ठी ।
कडियट्ठिवेट्ठियाइं, अट्ठारसपिट्ठिअट्ठीणि ॥२५॥

( जङ्घट्ठियासुऊरुत्ति ) जङ्घास्थिकयोरुरुप्रतिष्ठितौ स्थापितौ यद्वा जङ्घास्थितयोरूरू भवतः ( पइट्ठियत्ति ) अत्रायं पदसम्बन्धः तयोरूर्वोः स्थिता तत्स्थिता कटिः श्रोणिर्भवति कट्यां प्रतिष्ठिता स्थापिता ( पिट्ठित्ति ) पृष्ठिर्भवति कट्यास्थिवेष्टितानि अष्टादश १८ पृष्ठस्थीनि भवन्ति शरीर इति ॥ २५ ॥

दो अच्छि अट्ठियाइं, सोलस गीवट्ठियामुणेयव्वा ।
पिट्ठिप्पइट्ठियाओ, वारस किल पंसुली हुंति ॥२६॥

द्वे अक्ष्यस्थिनी भवतः षोडश ग्रीवास्थीनि ज्ञातव्यानि पृष्ठिप्रतिष्ठिताः द्वादश किलेति प्रसिद्धौ पंशुल्यो भवन्ति ॥२६॥

अट्ठिय कढिणे सिरन्हा, रूबंधणे मंसचम्मलेवम्मि ।
विट्ठा कोट्ठागारे, को वच्चघरो व मे रागो ॥

अस्थिभिः ( कढिणे ) कठिने यद्वा कठिनानि अस्थिकानि यत्र तत्तथास्मिन् सिराश्रसानां लघ्वीतराणां बन्धनं यत्र तत्तया तस्मिन्, मांसचर्म्मलेपे विष्ठाकोष्ठाकारे वर्चस्कग्रहोपमे कलेवरे रे जीव तव को रागः ॥२७॥

जह नाम वच्चकूवो, निच्चं भिणि २ भणंतकायकली ।
किमिएहिं सुलसुलायइ, सो एहिं य पूइयं वहइ ॥२८॥

यथेति दृष्टान्तोपदर्शने नामेति कोमलामन्त्रणे संभावने वा ( वच्चकूवोत्ति ) वर्चस्ककूपो विष्ठाभृतकूपो भवति किंभूतः भिणिभिणीतिशब्दं ( भणंतत्ति ) भणन् भृशं कथयन् काककलिर्वायसंसग्रामो यत्र स भिणिभिणित्यभणत्काककलिः क्रमिकैर्विष्ठानीवद्रुभिः सुलुसुलेत्येवं शब्दं करोतीति सुलुसुलायते श्रोतोभिश्च रेल्लकैः पूतिकं परमदुर्गन्धं वहति स्रवति इत्यर्थः यथा विष्ठाकूपः तथेदमपि शरीरं ज्ञातव्यं मृतावस्थायां रोगाद्यवस्थायां वेति । २८ ।

अथ शरीरस्य शवावस्थां दर्शयति गाथात्रयेण ।

उब्भियनयणं खगमुह, विकड्ढियं विप्पइन्नवाहुलयं ।
अंतविकड्ढियमालं, सीसघडी पागडीघोरं ॥

भिणि भिणि भणंत सद्दं, विसप्पियं सुलुसुलिंतमंसार्भ ।
मिसि २ मिसंत किमियं, थिवि थिवि थिवि अंतबीभच्छं॥

पागडिएणं पसुल्लियं, विगराडं सुक्कसंधिसंघायं ।
पडियं निच्चेयणयं, सरीरमेयारिसं जाण ! ३१ ।

उद्भूतं निष्कासितं काकादिभिर्नयने लोचने यस्य शवस्य यस्मिन् यस्माद्वा तदुद्भूतनयनं खगमुखैर्विदारितम्। ( विकरियंत्ति ) विकर्तितं विशेषेण कर्तितं पाटितं खगमुखविकर्तितम् विप्रकीर्णौ अवकीर्णौ विरलावित्यर्थः ( बाहुलयंति ) बाहू अवयवौ यस्य शवस्य तत् प्रकीर्णबाहुः (अंतविकड्डियमाजंति ) विकर्षितान्त्रमालं शृगालादिभिरिति ( सीस घडियायमित्ति ) प्रगटया शीर्षघटिकया तुम्बलिकया घोरं रौद्रम् ॥ २९ ॥ ( भिणिभिणीति भणंतत्ति ) धातूनामनेकार्थत्वाद्भ्रुत्पद्यमानः भिणिभिणीति शब्दो यत्र तत् भिणिभिणिभणच्छब्दं मक्षिकादिभिर्गणगणायमानमित्यर्थः । अङ्गादिशिथिलत्वेन विस्तारं व्रजत् ( सुलुसुलुंतमंसपोरुंति ) सुलुसुलायमानमांसपुटम् ( मिसिमिसिमिसंतकिमियंति ) मिसिमिसीति मिसन्तः शब्दं कुर्वन्तः कृमयो यत्र तन्मिसिमिसिमिसत्कृमिकं ( थिविथिविथिविथिवितबीभच्छंति ) उपजायमानैरन्तैर्बीभत्सं रौद्रमित्यर्थः ॥ ३० ॥ प्रकटिताः प्रकटत्वं प्राप्ताः पांशुलिका यत्र तत्प्रकटितपांशुलिकं विकरालं भयोत्पादकम् । शुष्काश्च ताः संधयश्च शुष्कसंधयस्तासां संघातः समुदायो यत्र तच्छुष्कसंघातं पतितं गर्तादौ निश्चेतनकं चैतन्यवर्जितं शरीरं वपुः एतादृशं पूर्वोक्तधर्मयुक्तं त्वं (जाणत्ति ) जानीहि ' जाणे ' इति पाठे तु निश्चेतनकं शरीरमहमीदृशं जानामीति ॥ ३१ ॥

वच्चाओ असुइनरं, नवहिं सोएहिं परिगलंतेहिं ।
आममलगरूवे, निव्वेयं वच्चह शरीरे ॥ ३२ ॥

नवभिः श्रोतोभिः परिगलद्भिः वर्चस्कादुद्भूतात् अशुचितरमपवित्रतमम् ( आममल्लगरुवेत्ति ) अपक्वशरावतुल्ये शरीरे निर्वेदं वैराग्यं व्रजत-विष्णुश्रीशरीरे विक्रमयशोराजस्येव । ३२।

दो हत्था दो पाया, सीसं उच्चं पियं कवंधम्मि ।
कलमलकोट्ठागारं, परिवहसि दुयादुयं वच्चं ॥ ३३ ॥

द्विहस्ते द्विपादे ( सीसं उच्चपियंति ) शीर्षमुच्चप्राबल्येन चम्पितं यत्र तच्छीर्षोच्चम्पितं तस्मिन् यद्वा शीर्षे उच्चप्राबल्येन चम्पितमाक्रमितं यस्तस्तथा तस्मिन् । प्राकृतत्वात् अनुस्वारः शीर्षोच्चम्पिते कलमलकोष्ठागारे एवंविधे कबन्धे ( दुयादुयंति ) शीघ्रं २ किं वर्चस्कं परिवहसि त्वामिति अत्र यथायोगं विभक्तिविपरिणामो ज्ञेय इति ॥ ३३ ॥

तं च किर रूववंतं, वच्चंतरायमग्गमाइयं ।
परगंधेहिं सुगंधयं, मन्नंतो अप्पणो गंधं ॥ ३४ ॥

चपुनस्तच्छरीरं (किरत्ति ) संभावनायां रूपवत् व्रजत् राजमार्गं ( आइयंति ) प्राप्तं तत्र परगन्धैः पाटलचम्पकादिभिः सुगन्धकं जातं तत्र च त्वमात्मनो गन्धं ( मन्नंतोत्ति ) जानन् हर्षयसीति ॥ ३४ ॥

परगन्धं दर्शयति–

पाडलचंपयमल्लिय–अगरुयचंदणतुरुक्ख मीसं वा ।
गंधं समोयरंतो, मन्नंतो अप्पणो गंधं ॥ ३५ ॥

पाटलचम्पकमल्लिकागुरुकचन्दनतुरुष्कमिश्रं वा अथवा मिश्रं संयोगोत्पन्नं यक्षकर्दमादिकं गन्धकस्तूर्यादिकं किंभूतं ( समो यरंतोति ) सर्वतो विस्तरत् एवंविधं परगन्धमात्मगन्धमिति (मन्नंतोत्ति ) जानन् हर्षयसीति ॥ ३५ ॥

सुहवाससुरहिगंधं, वायसुहं अगरुगंधियं अंगं ।
केसा न्हाणसुगंधा, कयरो ते अप्पणो गंधो ॥ ३६ ॥

शुभवासैः सुन्दरचूर्णैः सुरभिगन्धं सुष्ठु गन्धं शुभवाससुरभिगन्धं वातैः शीतलादिभिः सुखं शुभं वा यत्र तत् वातसुखम् अगरुगन्धो धूपनादिप्रकारेण जातोऽस्येति अगरुगन्धि तमेवंविधमङ्गं गात्रं वर्तते ( केसान्हाणसुगंधत्ति ) ये च केशाः कचाः ते स्नानेन सवनेन सुगन्धा वर्तन्ते अथ कथय त्वं कतरः कतमः ते तवात्मनो गन्ध इति ॥ ३६ ॥

अच्छिमलो कन्नमलो, खलो सिंघाणओ य पूओ य ।
असुई मुत्तपुरिसो, एसो ए अप्पणो गंधो ॥ ३७ ॥

अक्षिमलो दूषिकादिः कर्णमलः श्लेष्मा कण्ठमुखश्लेष्मा ( सिंघाणओत्ति ) नासिका श्लेष्मा चशब्दादन्योऽपि दन्तमलजिह्वामलगुह्यमलकक्षामलादिः किंभूतः ( पूओयत्ति ) पूतिको दुर्गन्धः तथा अशुचि सर्वप्रकारैरशुचं मूत्रपुरीषं प्रश्रावगूथमेषोऽनन्तरोक्तस्ते तवात्मनो गन्धः ॥ ३७ ॥

( ११ ) अथ वैराग्योत्पादनार्थं स्त्रीचरित्रं दर्शयति यथा–

जाओ चिय इमाओ इत्थियाओ अणेगेहिं कइवरसहस्सेहिं विविहपासपडिबद्धेहिं कामरागमोहेहिं वन्नियाओ ताओ वि एरिसाओ–तंजहा पगइविसमाओ १ पियवयणवल्लरीओ २ कइयवपेमगिरितडिओ ३ अवराहसहस्सघरणीओ ४ पभवो सोगस्स ५ विणासो बलस्स ६ सूणा पुरिसाणं ७ नासो लज्जाए ८ संकरो अविणयस्स ९ निलओ नियडीणं १० खणी वइरस्स ११ सरीरं सोगस्स १२ भेओ मज्जायाणं १३ आसाओ रागस्स १४ निलओ दुच्चरियाणं १५ माइए संमोहो १६ खलणा नाणस्स १७ चलणं शीलस्स १८ विग्घो धम्मस्स १९ अरी साहूणं २० दूसणं आयारपत्ताणं २१ आरामो कम्मरयस्स २२ फलिहो मुक्खमग्गस्स २३ भवणं दरिद्दस्स २४ अवि याओ इमाओ आसीविसो विव कुवियाओ २५ मत्तगओ विव मयणपरवसाओ २६ वग्घी विव दुट्ठहिययाओ २७ तणच्छन्नकूवो विव अप्पगासहिययाओ २८ मायाकारओ विव उवयारसयबंधणपओत्ताओ २९ आयरियसविधं पित्र बहुगिज्झसब्भावाओ ३० फुंफुया विव अंतोदहणसीलाओ ३१ नगयमग्गे विव अणवट्ठियचित्ताओ ३२ अंतो दुट्ठवणो विव कुहियहिययाओ ३३ किण्हसप्पो विव अविसस्सणिज्जाओ ३४ संघारो विव छन्नमायाओ ३५ संज्झब्भरागो विव मुहुत्तरागाओ ३६ समुद्दवीची विव चलस्सभावाओ ३७ मच्छो विव दुप्परियत्तणसीलाओ ३८ वानरो विव चलचित्ताओ ३९ मच्चु विव निव्विसेसाओ ४० कालो विव निरणुकंपाओ ४१ वरुणो विव पासहत्थाओ ४२ सलिलमिव निम्नगामिणीओ ४३ किवणो विव उत्ताणहत्थाओ ४४ नरओ विव

उत्तासणिज्जाओ ४५ खरो विव दुःसीलाओ ४६ दुट्ठा सो विव दुद्दमाओ ४७ बालो इव मुहुत्तहिययाओ ४८ अंधयारमिव दुप्पवेसाओ ४९ विसवल्ली अणल्लीय णिज्जाओ ५० दुट्ठग्गहा इव वावी अणवगाहाओ ५१ ठाणभट्ठो विव इस्सरो अप्पसंसणिज्जाओ ५२ किंपागफलमिव मुहमहुराओ ५३ रित्तमुट्ठी विव बालोभणिज्जाओ ५४ मंसपेसीगहणमिव सोवद्दवाओ ५५ जलियचुडली विव अमुच्चमाणडहणसीलाओ ५६ अरिट्ठमिव दुल्लंघणिज्जाओ ५७ कूडकरिसावणो विव कालविसंवायणसीलाओ ५८चंडसीलो विव दुक्खरक्खियाओ ५९ अइविसाओ ६० दुगुंछियाओ ६१ दुरुवचाराओ ६२ अगंभीराओ ६३ अविस्ससणिज्जाओ ६४ अणवत्थियाओ ६५दुक्खरक्खियाओ ६६ दुक्खपालियाओ ६७ अरइकराओ ६८ कक्कसाओ ६९ दढवेराओ ७० रूवसोहग्गमउमत्ताओ ७१ भुयगगइकुटिलहिययाओ ७२ कंतारगईठाणभूयाओ७३ कुलसयणमित्तभेयण कारिकाओ७४ परदोसपगासियाओ७५ कयग्घाओ ७६ बलसोहियाओ ७७ एगंतहरणलोलाओ७८ चंचलाओ७९जोईभंडोवरागो विवमुहरागविरागाओ८० अवि याइं ताओ अंतरंगभंगसयं ८१ अरज्जुओ पासो ८२ अदारुया अडवी ८३ अणालयस्स निलओ ८४ अइक्खवेयरणी ८५ अणाऽमियावाहि ८६ अवि ओगो विप्पलावो ८७ अरु उवसग्गो ८८ रइवंतो ८९ चित्तविब्भमो ९० सव्वंगओ दाहो ९१ अणब्भयावज्जासणी ९२ असलीलप्पवाहो ९३ समुद्दओ ९४ ॥

( जाओ चिय इमाओ ) इत आरभ्य [ समुद्दओ ] इति पर्यन्तं गद्यं या एव इमा वक्ष्यमाणाः स्त्रियः अनेकैः कविवरसहस्रैः विविधपाशप्रतिबद्धैः कामरागमोहैर्मन्मथरागमूढैः ( वन्नियाओत्ति ) वर्णिताः शृङ्गारादिवर्णनप्रकारेणेति ( ताओ वित्ति ) ता अपि ईदृशा वक्ष्यमाणस्वरूपा ज्ञातव्याः तद्यथा ( पगइविसमाओत्ति) प्रकृत्या स्वभावेन विषमा वक्रभावयुक्ता आवश्यकोक्तपतिमारिकावत् १( पिय०) प्रियवचनवल्लर्यां मिष्टवाणीमञ्जर्यां ज्ञातासूत्रोक्तजिनपालजिनरक्षितोपसर्गकारिणीरत्नद्वीपदेवीवत् २( कइय०)कैतवप्रेमगिरितटयः कुशिष्यकूलवालकपातिका मागधिकागणिकावत् ३ ( अवरा० )अपराधसहस्रगृहरूपाः ब्रह्मदत्तमातृचुलनीवत् ४ ( पभवो० ) अयं स्त्रीरूपो वस्तुस्वभावप्रभव उत्पत्तिस्थानं कस्य शोकस्य सीतागते रामस्येव ५ ( विणा० ) विनाशो बलस्य पुरुषबलस्य क्षयहेतुत्वात् । उक्तंच । "दर्शने हरते चित्तं, स्पर्शने हरते बलम् । सङ्गमे हरते वीर्यं, नारी प्रत्यक्षराक्षसी" ॥ इति यद्वा विनाशः क्षयः कस्य बलस्य सैन्यस्य कोणिकस्त्रीपद्मावतीवत् ६ ( सूणा० ) पुरुषाणां शूना वधस्थानं सुरिकन्तराज्ञीवत् ७ नाशो लज्जाया लज्जाभावरहितत्वात् लक्ष्मणप्रार्थनकारिकासूर्पणखावत् । यद्वा लज्जानाशः अस्याः सङ्गे पुरुषस्य लज्जानाशो भवति गोविन्दद्विजपुत्रवत् । यद्वा नाशः क्षयः लज्जायाः पतिलज्जायाः संघस्याऽऽषाढभूतियतिचारित्रलुण्टकानटपुत्रीवत् ८ ( संक० ) संकरउत्करुटकरुटकरुकर इति जनोक्तिः कस्य अविनयस्य श्वेताङ्गुल्यादिपुरुषाणां भार्यावत् ९ ( निल० ) निलयो गृहं कासां प्रच्छन्यान्तरदम्भानामित्यर्थः चण्डप्रद्योतप्रेषिता अभयकुमारवञ्चिकावेश्यावत् १० (खणीति) खानिराकरः कस्य वैरस्य जमदग्नितापसस्त्रीरेणुकावत् ११ शरीरं शोकस्य वीरककादम्बिकस्त्रीवनमालावत् १२ भेदो नाशः मर्य्यादायाः कुलरूपायाःश्रीपतिश्रेष्ठिपुत्रीवत् यथा मर्यादायाः संयमलक्षणाया विनाशः आर्द्रकुमारसंयमस्यार्द्रकुमारपूर्वभवस्त्रीवत् १३ ( आसाओत्ति ) आशा वाञ्छा रागस्य कामरागस्य तद्धेतुकत्वात् । यद्वा आश्रयः स्थानं रागस्य उपलक्षणत्वाद् द्वेषस्यापि आर्षत्वादाकारः । यद्वा आ ईषदपि अ इति न स्वादः आ अस्वादः कस्य [ रागस्सत्ति ] धर्म्मरागस्य १४ ( निल० ) निलयो गेहं केषां दुश्चरित्राणां भुयंगमचौरभगिनीवीरमतीवत् १५ ( माई० ) मातृकायाः समूहः कमलश्रेष्ठिसुतापद्मिनीवत् १६ ( खल० ) स्खलनाः खण्डनाः ज्ञानस्य श्रुतज्ञानादेः उपलक्षणाच्चारित्रादे रण्डाकुरण्डामुणिडकादिबहुप्रसङ्गे तदभावत्वात् । अर्हन्नकक्षुल्लकवत् १७ ( चल० ) चलनं शीलस्य ब्रह्मव्रतस्य ब्रह्मचारिणां तस्याः सङ्गे तत्र तिष्ठतीति भावः १८ ( विग्घो० ) विघ्नमन्तरायं धर्मस्य श्रुतचारित्रादेः १९ ( अरी० ) अरिर्निर्दयो रिपुः केषां साधूनां मोक्षपथसाधकानां चारित्रप्राणविनाशकहेतुत्वात् महानरककारागृहप्रक्षेपकत्वाच्चकूलवालुकस्य मागधिकावेश्यावत्२० [ दूस० ] दूषणं कलङ्कः केषां ( आया० ) ब्रह्मव्रताद्याचारापन्नानाम् २१ आरामः कृत्रिमवनं कस्य कर्मरजसः कर्मपरागस्य । यद्वा कर्म च निविडमोहनीयादि, रश्चकामः, चश्च चौरः, एवं तस्यारामं वाटिका २२ ( फलिहंत्ति० ) अर्गला यद्वा झम्पकः मोक्षमार्गस्य शिवपथस्य २३ भवनं गृहं दरिद्रस्य २४ ( अवियाउइमाउत्ति ) अपि च या इमा वक्ष्यमाणाः स्त्रियः एवंविधा भवन्ति (आसिवि०) विव शब्द इवार्थे आशीविषवत् दंष्ट्राविषभुजंगमवत् कुपिताःकोपङ्गता भवन्ति२५(मत्त.) मतंगज उन्मत्तमतंगज इव मदनपरवशा मन्मथविह्वला भवन्ति अभयाराज्ञीवत् २६ ( वग्घी० ) व्याघ्रीवत् दुष्टहृदयाः दुष्टचित्ताः पालगो मात्रपरमातृमहालक्ष्मीवत् २७ ( तण० ) तृणच्छन्नकूप इव तृणसमूहाच्छादितान्धवत् अप्रकाशहृदयाः शतकश्रावकभार्यारेवतीवत् २८ ( माया० ) मायाकारक इव परवञ्चकमृगाधिबन्धक इव उपचारशतबन्धनशतप्रयुक्ताः प्रयोक्त्र्यो वा तत्रोपचारशतानि उपचारिकवचनचेष्टादिशतानि बन्धनानि रज्जुस्नेहानि बन्धनशतानि च तेषां(पओत्ताओत्ति) प्रयोगकर्त्र्यः २९ ( आयरि० ) अत्रापि च इवार्थे आचार्यसाविधमिवानुयोगकृतसमीपमिव बहुभिरनेकप्रकारैरनेकपुरुषैर्वा ग्राह्यो ग्रहीतुं शक्यः । यद्वा आर्षत्वात् ( अगिज्झत्ति ) अग्राह्यः सर्वथाग्रहीतुमशक्यः सद्भाव अन्तरचित्ताभिप्रायो यासां ता बहुग्राह्यसद्भावाः । बह्वग्राह्यसद्भावा वा ३० ( फुंफु० ) फुंफुकः करीषाग्निः कोउकस्तद्वत् अन्तर्दहनशीलाः पुरुषाणामन्तर्दुःखाग्निज्वालनत्वात् । उक्तंच-" पुत्रश्च मूर्खो विधवा च कन्या, शठं च मित्रं चपलं कलत्रम् । विलासकालेपि दरिद्रता च विनाग्निना पञ्च दहन्ति देहम्" ३१ (नगय०) विषमपर्वतमार्गवत् अनवस्थितचित्ता नैकत्रस्थापितान्तःकरणा इत्यर्थःअनङ्गसेनसुवर्णकारजीवस्त्रीवत् यद्वा नग्नकमार्गवत् जिनकल्पिकपथवत् । नैकत्रचित्ताः यद्वा नग्नकमार्गवत् भूतावेष्टिताचारवत्

नैकत्र स्थानचित्ताः३२(अंतोदु०)अन्तर्दुष्टव्रणवत् कुथितहृदयाः तिन्नप्रष्टोन्मत्तरामावत् ३३ ( किण्ह० ) कृष्णसर्पवत् (अवि०) विश्वासंकर्तुमयोग्या इत्यर्थः ३४ ( संघा० ) संहारवत् बहुजन्तुक्षयवच्छन्नमायाः प्रच्छन्नमातृकाः ३५ ( संझ० ) सन्ध्याभ्ररागवत् मुहूर्तरागाः। तथाविधदुष्टवेश्यावत्-३६ ( समुद्द० ) समुद्रवीचिवल्लागरतरङ्गवच्चलस्वभावाः चञ्चलस्वाभिप्रायाः ३७ ( मच्छो० ) मत्स्यवदःदुष्परिवर्तनशीलाः महता कष्टेन परिवर्तनं पश्चाद्वालयितुं शीलं स्वभावो यासां तास्तथा ३८ (वानर०) वानरवत् चञ्चचित्ताः चपलाभिप्रायाः ३९(मच्चु विव) मृत्युवत् मरणवत् निर्विशेषाः विशेषवर्जिताः ४०(कालोत्ति०) दुर्भिक्षकाल एकान्तदुःषमाकालो वा यद्वा लोकोक्तो दुष्पर्प्यस्तद्वत् निरनुकम्पा दयांशवर्जिता कीर्तिधरराजभार्यासुकोसलजननीवत् । ४१ ( वरु० ) वरुणवत् पाशहस्ताः पुरुषाणामालिङ्गनादिभिः कामपाशबन्धनहेतुहस्तत्वात् ४२ ( सलि० ) सलिलमिव जलमिव प्रायो नीचगामिन्यः स्वकान्तनृपनदीप्रक्षेपिका अधमपङ्गुकामिका राज्ञीवत् ४३ [ किव० ] कृपणवत् उत्तानहस्ताः सर्वेभ्यो मातृपितृबन्धुकुटुम्बादिभ्यो विवाहादावादानहेतुत्वात् ४४ ( नरओ० ) नरकवत् त्रासनीया दुष्टकर्मकारित्वात् महाभयङ्कराः लक्ष्मणासाध्वीजीववेश्यादासीघातिका कुलपुत्रभार्यावत् ४५ [ खरो० ] खरवत् विष्टाभक्षकगर्दभवत् दुःशीलाः दुष्टाचाराः निर्लज्जत्वेन यत्र तत्र ग्रामनगरारण्यमार्गक्षेत्रगृहोपाश्रयचैत्यगृहगर्तवाटिकादौ पुरुषाणां वाञ्छाकारित्वात् । तथाविधवेश्या दुष्टदासीरण्डिकामुण्डिकादीनामिव ४६ [ दुट्ठस्सो० ] दुष्टाश्ववत् कुलक्षणघातकवत् दुर्दमाः सर्वप्रकारैर्निर्लज्जीकृता अपि पुनः पुरुषसंयोगे स्वकामाभिप्रायकर्षणहेतुत्वात् ४७ [बालो] बालवत् शिशुवत् मुहूर्तहृदयाः मुहूर्तानन्तरं प्रायोऽन्यत्र रागधारकवत् कपिलब्राह्मणासक्तदासीवत् ४८ [ अंधकार० ] कृष्णभूतेष्टादिभवमन्धकारमरणधरसमुद्भोद्भवतमस्कायं वा तद्वत् दुष्प्रवेशाः मायामहान्धकारगहनं येन देवानामपि दुष्प्रवेशत्वात् ४९ [ विस० ] विषवल्लीवत् हालाहलविषलतावत् [ अणा० ] अनाश्रयणीयाः सर्वथा सङ्गादिकर्तुमयोग्यास्तात्कालप्राणप्रयाणहेतुत्वात् पर्वतकराजस्य नन्दपुत्रीविषकन्यावत् ५० [ दुट्ठगाहा इव० ] दुष्टग्राहा निर्दयमहामकरादिजलजन्तुसेवितावापीवत् । अनवग्राह्या महता कष्टेनापि अप्रवेशयोग्याः सुदर्शनश्रेष्ठिवत् ५१ [ ठाणभ० ] स्थानभ्रष्टः ईश्वरो ग्रामनगरादिनायकस्तद्वत् । यद्वा स्थानं चारित्रगुरुकुलवासादिकं तस्माद्भ्रष्टः ईश्वरश्चारित्रनायकः साधुरित्यर्थस्तद्वत् । यद्वा स्थानं सिद्धान्तव्याख्यानरूपं तस्माद्भ्रष्टः उत्सूत्रप्ररूपणेन ईश्वरो गणनायक आचार्य इत्यर्थः तद्वत्। यद्वा स्थानभ्रष्टे दुष्टाचारे रक्त इत्यर्थः ईश्वरःसत्यकीविद्याधरस्तद्वत् अप्रशंसनीयाः साधुजनैः प्रशंसांकर्तुं योग्या नेत्यर्थः ५२ ( किंपाग० ) किंपाकफलमिव मुखे आदौ मधुरा महाकामरसोत्पादिका परं पश्चाद्विपाकदारुणाः ब्रह्मदत्तचक्रिवत् ५३ ( रित्तमु० ) रिक्तमुष्टिवत् पोल्लकमुष्टिकवत् बाललोभनीयाः अव्यक्तजनलोभनयोग्या वल्कलचीरीतापसवत् ५४ [ मंस० ] मांसपेसीग्रहणमिव सोपद्रवा यथा केनापि सामान्यपक्षिणा कुतश्चित् स्थानान्मांसपेशीप्राप्तौ तस्य अन्यदुष्टपक्षिकृतानेकशरीरपीडाकरिण उपद्रवा भवन्ति तथा रामाग्रहणेऽनेके इह भवे परभवे दारुणा उपद्रवा जायन्ते । यद्वा यथा मत्स्यानां मांसपेशीग्रहणं सोपद्रवं तथा नराणामपीति ५५ [ जलि० ] अमुञ्चन्ति अत्यजमानाः [ जलियचुमिलीविवत्ति ] प्रदीप्ततृणपूलिकेव दहनशीलाः ज्वालनस्वभावाः ५६ [ अरि० ] अरिष्टमिव दुर्लङ्घनीयाः ५७ [ कूड० ] कूटकार्षापण इवासत्यनाणकविशेष इव कालविसंवादनशीला काल विघातस्वभावा अकालचारिण्य इत्यर्थः ५८ [ चंड० ] चण्डशील इव तीव्रकोपीव दुःखरक्षिता ५९ [ अतिविसाओत्ति० ] अतिविषादा दारुणविषादहेतुत्वात् यद्वा [ अतीति ] अति क्रान्तो गतोऽकार्यकरणे विषादः खेदो यासां तास्तथा यद्वा अतीति विषं अतिविषम् आ समन्तात् ददति पुरुषाणां भूरि कान्तावत् यास्ता अतिविषादाः यद्वा अतीति भृशं दीति नानाविधः स्वादो विषयलाम्पट्यो यासां ता अतिविषादाः अथ वा अतिविषयात् प्रबलपञ्चेन्द्रियलाम्पट्यात् षष्ठीं नरकभूमिं यावत् सुसढमातृवत् गच्छन्ति यास्ता अतिविषयगाः प्राकृतत्वात् यकारलोपे सन्धिः । यद्वा स्वेन्द्रियविषयाप्राप्तौ अतिविषादा इति । यद्वा अतिवृषं तीव्रं पुण्यं येषान्ते अतिवृषाः मुनयस्तेषामासमन्तात् वसत्यन्तो बहिश्च कायन्ति यमयन्ति यम इवाचरन्ति चारित्रप्राणकर्षणत्वेन यास्ताः अति वृषाकाः यद्वा कायन्ति अभ्रयन्ति समितिगृहज्वालनत्वेन यास्ताः अतिवृषाकाः यद्वा लोकानामतिवृषे तीव्रपुण्यधने आभृशं चायन्ति चोरयन्ति यास्ताः अतिवृषाचाः ६० ( दुगुंछि ) जुगुप्सिकाः जुगुप्सां कर्तुं योग्याः मुनीनाम् ६१ ( दुरु० ) दुरुपचाराः दुष्टोपचारान्वितो वचनादिविस्तारो यासां तास्तथा ६२ अगम्भीरा गम्भीरगुणरहिताः ६३ (अवि०) अविश्वसनीया विश्रम्भं कर्तुमयोग्याः ६४ (अण०) अनवस्थिताः नैकस्मिन् पुरुषे तिष्ठन्तीत्यर्थः ६५ (दुक्ख०) दुःखरक्षिता कष्टेन रक्षणयोग्याः यौवनावस्थायाम् ६६(दुक्खपा०) दुःखपालिता दुःखेन पालयितुं शक्या बालावस्थायाम् ६७(अरइ०)अरतिकराः उद्वेगजनिकाः६८(कक्क०) कर्कशा इह परत्र कर्कशदुःखोत्पादकत्वात् ६९दढवैरा इह परत्रदारुणवैरकारणत्वात्७०[रूव०]रूपसौभाग्यमदमत्ताः तत्र रूपं चार्वाकृतिःसौभाग्यं स्वकीर्तिश्रवणादिरूपं मदोमन्मथजगर्वः ७१[ भुय० ] भुजगगतिवत् कुटिलहृदयाः ७२ [कंता०] कान्तार गतिस्थानभूताः कान्तारे दुष्टश्वापदाकुले महारण्ये गतिश्चैकाकित्वेन गमनं स्थानं चैकाकित्वेन वसनं तयोर्भूतास्तुल्याः दारुणमहाभयोत्पादकत्वात् ७३ (कुलस०) कुलस्वजनमित्रभेदनकारिकाः वंशज्ञातिसुहृद्विनाशजनिकाः ७४ [ पर० ] परदोषप्रकाशिकाः अन्यदोषप्रकटकारिकाः ७५ ( कय० ) कृतं वस्त्राभरणपात्रादिप्रदत्तं घ्नन्ति सर्वथा नाशयन्तीत्येवं शीलाः कृतघ्नाः ७६ [ बलसो० ] यत्र पुरुषवीर्यं प्रतिसङ्गमसङ्गं वा शोधयन्ति गालयन्तीत्येवं शीला बलशोधिकाः । यद्वा बलेन स्वसामर्थ्यलक्षणेन च निशादौ जारपुरुषादीनां शोधिकास्तच्छुद्धिकारिका बलशोधिकाः । यद्वा बलयोरलयोरैक्यादूरशोधिकाःस्वेच्छया पाणिग्रहणकरणत्वात् धम्मिलस्त्रीवृन्दवत् ७७ (एगं०) एकान्ते विजने हरणं नेतव्यं पुरुषाणां विषयार्थमेकान्तहरणम् यद्वा एकान्ते दूरग्रामनगरदेशादौ स्वकुटुम्बादिजनरहिते हरणं तत्र पुरुषाणां विषयार्थं लात्वा गमनमित्यर्थः तत्र कौलाः वनसूकरतुल्याः यथा सूकरः किमपि सारं कन्दादिकं भक्ष्यं प्राप्य विजने गत्वा भक्षयति तथेमाः ७८ [चंच०] चञ्चलाश्चपलाः ७९ [ जोइमंमो० ] ज्योतिर्माणरूपरागवत् अग्निभाजनसमीपरागवत् [ मुहरा० ] मुखरागविरागा यथाग्निभाजनसमीपे मुखं रागवद्भवति अन्ते विरागं तथेमाः। यद्वा ( जोइमंमोवरागाओत्ति ) पाठे तु ज्योति र्माणरूस्येचो-

परागाः यथा ज्योतिर्ज्योएऋमग्निभाजनमुपसमीपे रागवद्भवति तयेमाः वस्त्रादिभिरुप समीपे रागवत्यो भवन्तीत्यर्थः ८० [ अवियाइंति ] अपि चेति अभ्युच्चये आ इति वाक्यालंकारे [ तओत्ति ] ताः स्त्रियः [ अंतर० ] अन्तरङ्गसङ्गशतमन्यन्त-रविघटनशतम् अस्यापेक्षयायात पुरुषस्य परस्परं मैत्र्यादिवि नाशहेतुत्वात् । यद्वा अन्तर्मध्ये [ रंगत्ति ] पुरुषाणां ब्रह्मव्रत-चारित्रादिरागस्तस्य भङ्गशतं तस्य विघ्नहेतुत्वात् ८१(अरज्जू) अरज्जुकः पाशः रज्जुकं विना बन्धनमित्यर्थः ८२ [अदा] अदारु काष्ठादिरहिता अटवी कान्तारं यथा दारुका अटवी मृगतृष्णाहे तुर्भवति तयेमाः यथा काष्ठादिरहिता अटवी कदापि न ज्वलति यथेयमपि पापं कृत्वा न ज्वलति न पश्चात्तापं करोतीत्यर्थः नृपजनकलङ्कदात्रीश्रावकभार्यावत् । ८३ [ अणाल० ] न आलस्यमनुत्साहो ऽनालस्यं तस्य निलयः अकार्यादौ सादरं प्रवृत्तिहेतुत्वात् ८४ [ अइक्खवेयरणीत्ति. ] ईकृदर्शनाङ्क नयोरिति वचनात् अनैकवैतरणी अदक्ष्यवैतरणी परमा धार्मिकविकुर्वितनरकनदी तत्सङ्गे तदवाप्तिहेतुत्वात् अती क्ष्णवैतरणी वा ८५ [अणा०] अनामिको नामरहितो व्याधि-रसाध्यरोग इह परत्र तत्कारणत्वात् ८६ [ अविओ० ] न वि योगः पुत्रमित्रादिविरहः अवियोगः विप्रलापः तीव्रखेदः ८७ अरुक् रोगरहित उपसर्गः [ अरु० ] यद्वा आर्षत्वाद्ध-कारलोपे अरूपो रूपरहित उपसर्ग उत्पातः ८८ [ रइ० ] रतिः कामप्रिया विद्यतेऽस्येति रतिमान् कन्दर्पोऽयमिति ८९(चित्त विब्भम) चित्तभ्रमकारणम् यद्वा रतिमान् सुखदायी मनोभ्रमो मनोविकारः ९०[ सव्वंग० ] सर्वाङ्गगः सर्वशरीर व्यापीदाहः ९१ [ अणब्भया वज्जासणीति ] अनभ्रका अभ्ररहिता वज्राशनिर्विद्युत् । यद्वा इयं स्त्री [ असणीत्ति ] अशनिर्विद्युत् किंभूता अनभ्रका मेघरहिता वा पुनः किंभूता वज्रा वज्रतुल्या इत्यर्थः दारुणविपाका [ अप्पसूया वज्जासणी-त्ति] पाठे अप्रसूता अपत्यजन्मरहिता [ वज्जंत्ति ] वर्ज्या सुन्दरा-कारा एवंविधा रामा [ असणि० ] अशनिर्विद्युद्वालानां नरकादौ दारुणदहनहेतुत्वात् "अप्पसूयावज्जासुणीति" पाठे तु अप्रसूता नवयौवना परिणीता अपरिणीता वा सालङ्कारा अनलङ्कारा वा मुण्डा अमुण्डा वा एवंविधा रामा ( सुणीति ) ह्माकिका-शुनीवत् मण्डलीवत् [ वज्जंति ] वर्ज्या सर्वथा साधुभिर्मोक्षं काङ्क्ष-द्भिः ब्रह्मचारिभिश्चतुर्थव्रतरक्षां काङ्क्षद्भिर्वर्जनीयेत्यर्थः । का-यवाङ्मनोभिरिति ९२ [ असलिलप्पवाहोत्ति० ] अजलप्रवा-हः "असलिलप्पआवोत्ति" पाठान्तम् । अजलप्लावः जलं विना-रेल्लिरित्यर्थः ९३ [ समुद्दरओत्ति ] समुद्रवेगः केनापि धर्तु-मशक्यत्वात् 'समरूरओत्ति' पाठे तु सम्यगर्द्धं यस्मात्स समर्द्धः एवंविधः [ रओत्ति ] वेगः परमस्नेहवतां बान्धवानां परस्परं स्त्रीकलहे सति गृहार्द्धकरणहेतुत्वात् भ्रातृजिनपाख्यौ श्रेष्ठि-पुत्राविव ९४ ॥

अवि याइं तासिं इत्थियाणं अणेगाणी नाम निरुत्ताणि पु-रिसे कामरागपडिबद्धं नाणाविहेहिं उवायसयसहस्सेहिं वहबंधणमाणयंति पुरिसाणं नो अन्नो एरिसो अरी-अत्थि ओत्ति नारिओ तंजहा नारी समाननराणं अरि ओ नारिओ १ नाणा विहेहिं कम्मेहिं सिप्पयाइएहिं पु-रिसे मोहंतित्ति महिलाओ २ पुरिसे मत्ते करंतित्ति पम-याओ ३ महंतं कलिजणयंतित्ति महिलियाओ ४ पुरि-से हावभावमाईहिं रमंतित्ति रामाओ ५ पुरिसे अंगा णुराए करंतित्ति अंगणाओ ६ नाणाविहेसु जुद्धभंडणसंगामाडविसु मुहाणगिण्हणसीउण्हदुक्खकिलेसमाईसु पुरिसे लालयंतित्ति ललणाओ ७ पुरिसे जोगनिओएहिं वसे ठावंतित्ति जोसियाओ ८ पुरिसे नाणाविहेहिं भावेहिं वण्णंतित्ति वणियाओ ९ काई पमत्तभावं काई पयणं सविब्भमं काई ससंसासिव्व ववहरंति काई सत्तुव-रोरो इव काई पयएसु पणमंति काई उवणएसु उवणमंति काई कोउय नमंतिओ काओ सुकडक्खनिरिक्खिएहिं सविब्भासमहुरेहिं उवहसिएहिं उवगूहिएहिं उवसद्देहिं गुरुगदरिसणेहिं भूमिलिहणविलिहणेहिं च आरुहणन ट्टणेहिं च बालयउवगुहणेहिं च अंगुलिफोडणथणपीलणकडितडजायणाहिं तज्जणाहिं च अवि याइं ताओ पासोव्वबसिउं जे पंकुव्वखुप्पिउं जे मच्चुव्व मरिउं जे अगणिव्व डहिउं जे असिव्व छिज्जिउं जे ॥

(अवियाइंति) पूर्ववत् [ तासिं इति ] तासामुक्तवक्ष्यमाणानां स्त्रीणामधमाधमानां दासीकुरुण्डादीनामनेकानि विवि-धप्रकाराणि नामनिरुक्तानि नामपदभञ्जनानि भवन्ति पुरिसे इत्यादि यावत् [ नारीओत्ति ] व्युत्पादयति कथं ना-आ-अरि-इति ना इति नानाविधैरुपायशतसहस्रैः कामरागप्रतिबद्धं पुरुषं वधबन्धनं प्रति, आ-इति आनयन्ति प्रापयन्ति[अरीत्ति] पुरुषा-णां च नान्यदृशः अरिः शत्रुरस्तीति नार्यः [तंजहत्ति] तत्पूर्वोक्तं यथेति दर्शयति नारीति [तन्दु०] [नार्यादिशब्दानां व्युत्पत्त-यस्तत्तच्छब्दे द्रष्टव्याः ] [ काइपमत्तभावंति ] काश्चित् का-मिन्यः प्रकर्षेण मत्तभावमुन्मत्तभावं व्यवहरन्ति स्वचेष्टां दर्श यन्तीत्यर्थः । क इव श्वासीव श्वासरोगीवत् । पुरुषाणां स्नेहभावोत्पादनार्थं [ काइस० ] काश्चित् शत्रुवत् प्रवर्तयन्ति मारणार्थं मर्मस्थानग्रहणेन । यद्वा स्वभर्त्रादीनां भयोत्पादनार्थं रिपुवत्प्रवर्तयन्ति [ रोरो ] काश्चित् कामतृष्णातृषिताः रोर इव रङ्क इव रङ्कपुरुषाणामपि पादयोः पादान् वा प्रणमन्ति लगन्तीत्यर्थः । [ काइउव० ] काश्चित् उपनयनैर्नृत्यप्रकारैरुप नमन्ति स्वसकलाङ्गादिदर्शनार्थम् ( काइकोउ० ) काश्चित् कौतुकं वचननयनादिजं कृत्वा विधाय नमन्ति नराणां हास्याद्युत्पादनार्थम् । काओ इति पदमग्रेपियोज्यम् ( सुकडक्खनिरिक्खएहिंति ) काश्चित् सुकटाक्षनिरीक्षितैः सुष्ठु नेत्रविकार-निरीक्षणैर्वालानापातयन्तीति विशेषः तैः काश्चित् पुरुषान्मो-हयन्ति इति ( उवहसिएहिंति. ) उपहसितैः काश्चित् हास्य-चेष्टाकरणैः कामिनां हास्यमुत्पादयन्तीति ( उवगूहिएहिंति ) उपगूढानि पुरुषस्यालिङ्गनैः कान्तनयनालिङ्गग्रहणकरग्रह-णादीनि तैः काश्चित् नराणां स्वप्रेमभावं दर्शयन्तीति (उवस द्दिएहिंति ) उपशब्दानि सुरतावस्थायां बलबलायमानादीनि शब्दकरणानि प्रच्छन्नसमीपशब्दकरणानि वा तैः काश्चित् कामिनां कामरागं प्रकटयन्तीति ( गुरुगदरिसणेहिंति ) गुरु काणि च प्रौढानि पयोधरनितम्बादीनि स्थूलोन्नतत्वात्सुन्दराणि वा यानि दर्शनानि च आकृतयः तानि गुरुकदर्शनानि तैर्दूरस्था एव काश्चित् कामिनां स्ववशं कुर्वन्तीति । यद्वा[गु] इति गुह्यप्रका शनेन पुरुषं पातयन्ति । यद्वा गु इति गुरुं स्वजनकलत्रादिकम-

ऽपि विप्रतार्याकार्ये प्रवर्त्तयन्तीति ( १ ) रु इति रोदनकरणेन पुरुषं सस्नेहं कुर्वन्ति (२) न इति स्वपितुर्गृहगमनादिप्रस्तावे पुरुषमत्यन्तरागवन्तं कुर्वन्तीति ( ३ ) द इति दर्शनेन रक्तकृष्णादिदन्तदर्शनेन कामिनो मोहयन्तीति ( ४ ) रि इति संभावणे रे मां मुञ्च रे मां मा कदर्थयेत्यादिकथनेन कुरामाः पुरुषं सकामं कुर्वन्तीति आर्षत्वात् रि इति । यद्वा अरि इति रतिकलहे अरे मया सह मा कुरु उपहासमित्यादि रतिकलहकरणेन पुरुषं क्रीडयन्तीति आर्षत्वात् अरि इति ( ५ ) स इति अन्योऽन्यहास्यगीतादिकशब्दकरणेन साधूनपि सकामान्कुर्वन्तीति ( ६ ) ण इति सकज्जलकविकारसजलाभ्यां नेत्राभ्यां पुरुषं सकामं स्ववशंगमं स्वकार्यकर्त्तारमपराधभोक्तारं कुर्वन्तीति ( ७ ) गुह्यदर्शनैरिति । ( भूमिलिहण विलिहणेहिंचेति ) भूमिलिखनानि भूमौ पदादिनाऽक्षरलेखनानि विलिखनानि विशेषतो रेखास्वस्तिकादिकरणानि तैः स्वगुह्यं पुरुषान् ज्ञापयन्तीति भूमिलिखनविलिखनैरिति चकारोऽत्र समुच्चयार्थः ( आरुहणनट्टणेहिंचेत्ति ) आरोहणानि वंशाग्रादिचटनानि नर्त्तनानि भूमौ नृत्यकरणानि तैरारोहणनर्त्तनैः पुरुषादिकमाश्चर्यवन्तं कुर्वन्तीति ( बालयउवगूहणेहिंचेति ) बालका मूर्खाः कामिन इत्यर्थः तेषामुपगूहनानि प्रच्छन्नरक्षणादीनि तैर्बालकोपगूहनैः कुरामाः स्वकामेच्छां पूरयन्तीति । यद्वा बालकाः केशकलापास्तैरुपगूहनानि रचनाः स्वच्छचरणाच्छादितादीनि तैर्मन्मथप्रस्तावप्रसाधमान् स्ववशं कृत्वा बलीवर्दवत् वाहयन्तीति । च शब्दात्कपिवद्भ्रामयन्ति अश्ववारयन्ति श्रेणिकभार्याधनश्रीराज्ञीवत् । स्वार्थप्राप्तौ प्राणत्यागमपि कुर्वन्तीति ( अंगुलि० ) अङ्गुलीस्फोटनानि क्रीडिकाकरणानि । यद्वा अङ्गुलीनां परस्परं ताडनानि । स्तनपीडनानि कराभ्यां पयोधरचापनानि हस्ताभ्यां कुचमर्दनानि वा कटितटयातनानि श्रोणिभागपीडनानि कराभ्यां वक्रगत्या वा तैः कामिनां चित्तान्यान्दोलयन्तीति ( तज्जणाहिंचेति) तर्जनानि अङ्गुलिमस्तकतृणादिचालनानि तैर्मन्मथपीडामुत्पादयन्ति कामिनां च शब्दा उज्ज्वलनेपथ्यकराङ्गुल्याभरणशब्दोत्पादनैः सविलासगत्या चतुष्पथादौ प्रवर्त्तनैरित्याद्यनेकप्रकारैर्नरान् वृषभतुल्यान् कुर्वन्त्यतः संयमार्थिभिः साधुभिरासां सङ्गस्त्याज्य इति । तथा ( अवियाइंति ) पूर्ववत् "ताओपासोववसिउंजे" इति प्राकृतत्वाल्लिङ्गव्यत्ययः । या कुरामादयः स्त्रियः सन्ति जगति [ ताओत्ति ] ताः पुरुषान् पाशवत् नागपाशवागुरादिबन्धनवत् वसितु धातूनामनेकार्थत्वात् बन्धितुं वर्तन्ते इह परभवे नराणां बन्धनकारणत्वात् [ पंकुव्वखुप्पिउंजेत्ति ] ताओत्ति अग्रेऽपि अनुवर्त्तते याः कुटिलादयः सन्ति ताः नराणां पङ्कवत् । अगाधा इव बहुलसमुद्रादिकर्दमवत् क्षपितुं वर्तन्ते [ मच्चुव्वमरिउंजेत्ति ] याः स्वैरिण्यादयः सन्ति ताः नराणां मृत्युवत् कृतान्तवत् मारयितुं मारणार्थमित्यर्थः प्रवर्तन्ते । [ अगणिव्वडहिउंजेत्ति ] या जगति गणिकादयः सन्ति ताः कामिनामग्निवद्दग्धं ज्वालयितुं परिभ्रमन्ति [ असिव्वछिज्जिउंजेत्ति ] या मृगाक्षवामाक्षतरुणी परिव्राजिकादयः सन्ति ताः कौटिल्यकरणाः साधूनपि असिवत्खड्गवच्छेत्तुं द्विधाकर्त्तुमुत्सहन्ते ।

अथ स्त्रीवर्णनं पद्येन वर्णयति यथा—

असिमासिसारित्थीणं, कंतारकवाडचारयसमाणं ।
घोरनिउरंबकंदर, चलंतबीभत्थभावाणं ॥ १ ॥

नारीणां सर्वथा विश्वासो न विधेयः । किंभूतानाम् आसिमसीसदृशीनां करवालकज्जलतुल्यानाम् । अयमाशयः यथा खड्गःपाणिकतेतराभ्यरातिर्निर्दयतया छेदयति तथा अनार्या नार्योऽपि नरानिह परत्र दारुणदुःखोत्पादनेन छेदयन्ति । यथा च कज्जलं स्वभावेन कृष्णमस्य श्वेतपत्रादिसंगमे सति तस्य कृष्णत्वं जनयति,तयोन्मत्तनारी स्वभावेन कृष्णा दुष्टान्तःकरणत्वात्तत्संगमे उत्तमकुलोत्पन्नानामुत्तमानामपि कृष्णत्वमुत्पादयति यशोधनक्षयराजविडम्बनादिहेतुत्वात् । पुनः किंभूतानां कान्तारकपाटचारकसमानाम् अरण्यकपाटकारागृहतुल्यानाम् । अयमाशयः । यथा गहनं वनं व्याघ्राद्याकुलं जीवानां भयोत्पादकं भवति तथा नराणांनार्योऽपि भयं जनयन्ति धनजीवितादिविनाशहेतुत्वेनेति यथा प्रतोल्यां कपाटे दत्ते केनापि गन्तुं न शक्यते तथा नरे नारीकपाटहृदये दत्ते सति केनापि कुत्रापि धर्मवनादौ गन्तुं न शक्यते । यथा च जीवानां कारागृहं दुःखोत्पादकं भवति तथा नराणां नार्योऽपीति । पुनः किंभूतानां ( घोरनि० ) घोरा रौद्राः प्राणनाशहेतुत्वात् । निकुरम्बं घनं अगाधमित्यर्थःयत्कामिति जलं तस्य दरो भयं यस्माद्भावात्साङ्केतपुराधिपदेवरतिराजस्येव स निकुरम्बकन्दरः । कमिति अव्ययशब्द उदकवाचकः । चलन् पुरुषं २ प्रति भ्रमन् बीभत्सो भयङ्करः इह परत्र महाभयोत्पादकत्वादेवंविधो भाव आन्तरमायावकस्वभावो यासां ता घोरनिरकुम्बकन्दरचलद्बीभत्सभावास्तासां घोरभावानाम् ॥ १ ॥

दोससयगग्गरीणं, अजससयविसप्पमाणहियथाणं ।
कइयवपन्नत्तीणं, ताणं अन्नायसीलाणं ॥ २ ॥

दोषशतगर्गरिकाणां दोषाः परस्परकलहमत्सरगालिप्रदानमर्मोद्घाटनकलङ्कप्रदानजल्पनशापप्रदानस्वपरप्राणघातचिन्तनादयस्तेषां शतानि तेषाम् । गर्गरीका भाजनविशेषास्तासां दोषशतगर्गरिकाणाम् [ अजस० ] न यशःशतानि अयशःशतानि तेषु विसर्पद्विस्तारं गच्छद्धृदयं मानसं यासां ताः अयशः शतविसर्पद्धृदयास्तासाम् । तथा [ कइयवत्ति [ कैतवानि कपटानि नेपथ्यभाषामार्गगृहपरावर्त्तादीनि [ पन्नत्तीत्ति ] प्रज्ञाप्यन्ते याभिस्ताः कैतवप्रज्ञप्तयः यद्वा कैतवानां दम्भानां प्रकृष्टाः ज्ञप्तयो ज्ञानानि कमलश्रेष्ठिसुतापाञ्चिनीवद्यासु ताः कैतवप्रज्ञप्तयः । यद्वा कैतवेषु प्रज्ञाया बुद्धेरासेरादानं यासां तास्तासां कैतवप्रज्ञप्तीनाम् । तथा [ ताणंति ] तासां नारीणां अज्ञातशीलानां पण्डितैरप्यज्ञातस्वभावानाम् । यदुक्तं— " देवाणदाणवाणं, मंतं निमंतनिउणा जे । इत्थीचरियम्मि पुणो, ताण वि मंता कहं नट्ठा १ जालंधरेहिं भूमिहरेहिं विविहेहिं अंगरक्खेहिं । निवरक्खियावि लोए, रमणी वम्भमग्गाय २ मच्छपयं जलमज्झे आगासे पंखियाण पयपंती । महिलाण हिययमग्गो, तिन्नि वि लोए न दीसंति ३" इति यद्वा न ज्ञातं नाङ्गीकृतं शीलं ब्रह्मस्वरूपं याभिस्ता अज्ञातशीलास्तासाम् । यद्वा नञः कुत्सार्थत्वात्कुत्सितं ज्ञातं शीलं साध्वीनां याभिः परिव्राजिकायोगिन्यादिभिस्ता अज्ञातशीलास्तासां मुनिवरैः प्रसङ्गैकान्तजल्पनैकत्रवासविश्वाससहचलनादिव्यापारो वर्जनीय इति ॥ २ ॥

अन्नं रयंति अन्नं, रमंति अन्नस्स दिंति उल्लावं ।
अन्नो कडयंतरिओ, अन्नो पडयंतरे ठविओ ॥ ३ ॥

द्विन्यादिपुरुषसंभवे अन्यं स्वभावसमीपस्थं नरं रञ्जयन्ति अर्द्धवीक्षणादिना कामरागवन्तं कुर्वन्तीत्यर्थः । पल्ली-

पतिलघुभ्रातरं प्रति अगमदत्तश्रमिदनमञ्जरीवत् । यद्वा स्वकुशीलत्वं केनापि ज्ञाते सति ( अन्नं रयंतित्ति ) अन्याद्विप भक्षणकाष्ठभक्षणादिकं रचयन्ति कपटेन निष्पादयन्ति । यद्वा जारस्य स्वान्तःकरणज्ञापनाय [ अन्नंरयंतित्ति ] अन्यदात्मव्यतिरिक्तं तृणतन्तुदएमादिकं रदन्ति उत्पाटनं कुर्वन्तीत्यर्थः । रद विलेखने इति विलेखनमुत्पाटनमिति । यद्वा अन्यं रयन्तीति अन्यं स्वकान्तव्यतिरिक्तं पुत्रभ्रातृकान्तमित्रादिकं प्रति रामा अधमकामाः रय गतौ रखु गतौ वा रयन्ते रयंति वा गच्छन्ति । तथा [ अन्नं रमंतित्ति ] अन्यं स्वकान्तव्यतिरिक्तं नरं रमन्ते मैथुनतत्पराः क्रीमयन्तीत्यर्थः पातालसुन्दरीवत् । द्यूतादिप्रकारेण क्रीमयन्ति वा [ अन्नस्संदिति उल्लावंति ] अन्यस्योक्तव्यतिरिक्तस्य ददति प्रयच्छन्ति उल्लापं वचनं बोलरूपम् । यद्वा अनेक नरपरिवृता अपि अन्यस्य नरस्य मार्गादिगच्छतः स्थितस्य वा उत्प्राबल्येन लापं मन्मथोद्दीपनशब्दं ददतीति । उल्लापयन्ति पाठे तु कामिनस्त्यादिसंभवे सति उन्मत्ताकुरामाः अन्यस्मै ददति उल्लातं प्रबलपादप्रहारमित्यर्थः । तथा अन्यः कश्चिद्बलीवर्दरूपः कटान्तरितः कटान्तर्वर्ती प्रच्छन्नरक्षितो भवतीति । तथा अन्यस्तत्कटाक्षवाणसमूहेन ग्लानीकृतः । पटकान्तरे वस्त्रविशेषान्तरे स्थापितो भवेत् ग्लानवत् इति । ३ ।

गंगाए वालुयाए, सागरजलं हिमवओय परिमाणं ।
उग्गस्स तवस्स गइ, गब्भुप्पत्तिं च विलयाए ॥ ४ ॥
सिंहे कुंभवुयारस्स, पुट्टलकुकुहाइयं अस्से ।
जाणंति बुद्धिमंता, महिलाहियं न याणंति ॥ ५ ॥

गङ्गायां वालुकां वालुकणान्सागरे समुद्रे जलं जलपरिमाणमित्यर्थः । हिमवतो महाहिमवन्नगस्य परिमाणमुर्ध्वाधस्तिर्यकूपरिधिप्रतरघनमानम् । उग्रस्य तीव्रस्य तपसो गतिं फलप्राप्तिरूपां गर्भोत्पत्तिं च ( वियापत्ति ) वनिताया नार्याः सिंहे कुंभवुयारमिति रूढि गम्यं ( पुट्टलंति ) जठरोद्भवं ( कुकुहाइयंति ) गतिकाले शब्दविशेषमश्वघोटके जानन्ति अवगच्छन्ति बुद्धिमन्तः प्रज्ञावन्तः महिलायाः कूटकपटलोहपरवञ्चनपरायाः प्रबलमन्मथाभिधगधगायमानायाः अतर्कितातुच्छोच्छलितकटकएठोद्गच्छद्गीयमानमधुरगेयध्वनिमृगीकृतमुनिवरायाः ललाटे पट्टतटघटितघनश्रीखएमतिलकचन्द्रचकोरीकृतचतुरायाः पीनपयोधरपीठलुठन्निर्मलामलकस्थूलमुक्ताफलहारश्वेतदृग्विष भुजंगमगतविवेकचैतन्यकृतानेकपाएिक -तायाः हृदयं गूढान्तः करणं न जानन्ति न सम्यगवगच्छन्तीति । उक्तंच " स्त्रीजातौ दाम्भिकता, भीरुकता जूयसी वणिग्जातौ । रोषः क्षत्रियजातौ, द्विजातिजातौ पुनर्लोभः ॥१ ॥ न स्नेहेन न विद्यया न च श्रिया रूपेण शौर्येण वा, नेर्ष्यावादभयार्थदानविनयक्रोधक्षमामार्दवैः । लज्जायौवनभोगसत्यकरुणासत्वादिभिर्वा गुणै गृह्यन्ते न विभूतिभिश्चलना दुःशीलचित्ता यतः " ॥ २ इति ।

एरिसगुणजुत्ताणं, ताणं कइयव्व संठियमणाणं ।
न हु भे वीससियव्वं, महिलाणं जीवलोगम्मि ॥

ईदृशगुणयुक्तानामुक्तवक्ष्यमाणलक्षणान्वितानां तासां नारीणां कपिवद्वानरवत्संस्थितमनसां नैव भवद्भिः विश्वसितव्यं महिलानां जीवलोके इति ॥ ६ ॥

निब्भन्नयं च खन्नयं, पुप्फेहिं विवज्जियं च आरामं ।
निदुध्धियं च धेणुं, लोए वि अतिल्लिय पिंमं ॥ ७ ॥

यादृशमिति गम्यते निर्धान्यकं धान्यकणविवर्जितं चारामं तादृशं तरुणीमएमलं शुभभावनाकुसुमरहितत्वात् । यादृशा निर्दुग्धिका दुग्धरहिता धेनुर्गौस्तादृशाभ्रष्टव्रतिनी धर्मध्यानदुग्धाभावात्तथा लोके अपि शब्दः पूरणार्थे यादृशं ( अतिल्लियंति ) सर्वथा तैलांशरहितं पिएमं खलखंएमं तादृशं महिलाव्याघ्रीमएमलं परमार्थेन स्नेहतैलविवर्जितत्वात् । ७ ।

जेणंतरेणलोय-णाणि निमिसंति तेण य वियसंति ।
तेणंतरे वि हियर्य, चित्तसहस्साउलं होइ ॥ ८ ॥

स्त्रीणां येन परमवल्लभेन सर्वार्थसंप्रापिकारकेणान्तरेण विना लोचनानि प्रफुल्लनेत्राणि तत्क्षणे निमिषन्ति संकुचितभावं गच्छन्तीत्यर्थः च पुनस्तेनैव परमवल्लभेन स्वार्थप्राप्त्यकारकेणान्तरेण विना विकसन्ति प्रफुल्लनेत्राणि भवन्तीत्यर्थः । तेणंतरे इति प्राकृतत्वात्तृतीयार्थे सप्तमी अपि शब्द एवार्थे तथा कुलस्त्रीणां हृदयं कदाचित्स्ववल्लभे प्रवर्तते स्ववल्लभे सत्यपि कदाचित्तासां चित्तं स्वमानसं सहस्राकुलं स्वकान्तव्यतिरिक्तपुरुषान्तरसहस्रेषु आकुलं मन्मथभावेन परिभ्रममाणं भवतीत्यर्थः । शाकिनीवत् । अतो मुनिवरैरत्नत्रयरक्षणपरैर्मुक्तगृहारम्भभरैरासां कुरएममुएमीदासीयोगिन्यादीनां यथा कथंचित्परिचयो न कार्य इति । अस्या अन्यदपि व्याख्यान्तरं सद्गुरुप्रसादात्कार्यमिति ॥ ८ ॥ तन्दु० ॥

( १२ ) स्त्रीणामशुचित्वं यथा—
"मंसं इमं मुत्तपुरीसमीसं, सिंहाणखेलाण य निज्झरंतं । एवं अणिच्चं किमिआण वासं, पासं नराणं मइवाहिराणं "
इत्यादि—धर्म० ।

सर्वस्वापकर्षवत्वं यथा—

नो रक्खसीसु गिज्झि—ज्जा गंमवत्थासुणेगचित्तासु ।
जाओ पुरिसं पलोभित्ता,खेल्लंति जहाव दासेहिं ॥ १८ ॥

नो नै वराक्षस्य इव राक्षस्यः स्त्रियस्तासु यथा हि राक्षस्यो रक्तसर्वस्वमपकर्षन्ति जीवितं च प्राणिनामपहरन्त्येवमेता अपि तत्वतो हि ज्ञानादीन्येवं जीवितं स्वार्थं च तानि चताभिरपह्रियन्त एव तथा च हारिलः " घातोद्भूतो दहति हुतभुग्देहमेकं नराणां, मत्तो नागः कुपितभुजगश्चैकदेहं तथैव । ज्ञानं शीलं विनय विभवौदार्यविज्ञानदेहान्सर्वानर्थान् दहति वनिता मुष्मिकानैहिकांश्च " ( गिज्झिज्जाति ) गृध्येदभिकाङ्क्षावान् भवेत् कीदशीषु ( गंमवत्थासुत्ति ) गएम गएम इह चोपचितपिशितपिएमरूपतया गलत्पूतिरुधिरार्द्रतासंभवाच्च तदुपमंत्वाद्गएमे कुचावुक्तौ । ते वक्षसि यासां तास्तथाभूतास्तासु वैराग्योत्पादनार्थं चैवमुक्तम् । तथा अनेकान्यनेकसङ्ख्यानि चञ्चलतया चित्तानि मनांसि यासां तास्तासु अनेकचित्तासु आह च " अन्यस्याङ्के ललति विशदं चान्यमालिङ्ग्य शेते, अन्यं वाचा वपति हसयत्यन्यमन्यं च रौति । अन्यं द्वेष्टि स्पृशति कशति प्रोर्णुते चान्यमित्थं,नार्यो नृत्यत्तमित इव धिक् चञ्चलावालिकाश्च " तथा ( जाउत्ति ) याः पुरुषं मनुष्यं कुलीनमपीति गम्यते प्रलोभ्यत्वमेव शरणत्वमेव च प्रीतिरहमित्यादिकाभिर्वाग्भिर्विप्रतार्य क्रीमन्ति ( जहावत्ति ) वा शब्दस्यैवकारार्थत्वाद्यथैव दासैः एह्यागच्छ मा वद त्वं मायासीरित्यादिविवक्षितप्रभृतिक्रीमाभिर्विलसन्तीति सूत्रार्थः ॥ १८ ॥

पुनस्तासामेवातिहेयतां दर्शयन्नाह ।

नारीसु नो पगिज्झिज्जा, इत्थिविप्पयहे अणगारं ।

